त्मनः सर्वदावस्थानात् अनिर्मोक्षः स्यात्, यद्यनित्या तदोत्पन्ना वाच्या अनित्यभावस्यानुत्पत्त्यभावात्, तथा च तदुत्पत्तेः प्राक् तदाश्रितधर्मादेरप्यभावेन बुद्धितत्त्वस्यानुत्पत्तौ नियतशरीरेन्द्रियादिकार्यस्यानुत्पत्तौ असंसारः स्यादित्यर्थः ॥ १४ ॥

चार्वाकस्तु 'भवतु चेतनधर्मोऽदृष्टं चेतनश्च न नित्यविभुः किन्तु कायाकारपरिणतभूतविशेषः गौरोऽहं जानामीति प्रतीत्या रूपवत्त्वसिद्धेः' इत्यत्राह

नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासङ्क्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥

शरीरस्य चैतन्ये बाल्यदशायामनुभूतस्य यौवने स्मरणं न स्यात् चैत्रदृष्टस्य मैत्रेणास्मरणमिव । न च बाल्ययौवनयोरेकं भूतं शरीरम्, अपक्रमात् पूर्वशरीरविनाशात् परिमाणभेदेन द्रव्यभेदात् पूर्वपरिमाणनाशस्याऽऽश्रयनाशहेतुकत्वात् । न च कारणेनानुभूतस्य कार्येण स्मरणं स्यादिति वाच्यं वासनासङ्क्रमाभावात्, अन्यथा मात्राऽनुभूतस्य गर्भस्थेन स्मरणापत्तेः । 'ननूपादानवासनाया उपादेये सङ्क्रमः स्यात्' इत्यत्राह न च गत्यन्तरं स्थिर इति । स्थिरे स्थिरपक्षे पुञ्जात् पुञ्जान्तरोत्पत्तेरभावात् करादि शरीरस्योपादानं वाच्यं, तथा च विच्छिन्ने करादौ तदनुभूतस्य स्मरणं न स्यात्, खण्डशरीरे विच्छिन्नकरादेरनुपादानत्वात् । न च परमाणूनां चैतन्यं तेषाञ्च स्थिरत्वात् स्मरणं स्यादिति वाच्यं, तथा सति स्मरणस्यातीन्द्रियत्वप्रसङ्गात् तन्निष्ठरूपादिवत्, करपरमाण्वनुभूतस्य विच्छिन्नकरपरमाणुसन्निधावस्मरणप्रसङ्गाच्च ॥ १५ ॥

'नन्वस्तु क्षणभङ्गः तथा च पूर्वपूर्वपरमाणुपुञ्जेनोपादेयो-त्तरोत्तरपरमाणुपुञ्ज इति न स्मरणानुपपत्तिः' इत्यत्राह

न वैजात्यं विना तत् स्यात् न तस्मिन्ननुमा भवेत्।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥ १६ ॥

वैजात्यं कुर्वद्रूपत्वं विना न तत् क्षणिकत्वं स्यात् सिध्यतीत्यर्थः। स्थिर एव वीजादौ सहकारिलाभालाभाभ्यामेव कार्यजन्माजन्म-नोरुपपत्तेः वीजत्वादिनैवाङ्कुरादिजनकतोपपत्तेः, वीजव्यक्तिभे-दाभावे कुतः क्षणिकत्वं स्यात्। तस्मिन् जातिविशेषे च ऐन्द्रिय-कत्वेनावतीन्द्रियत्वेनाभ्युपगम्यमाने सत्यनुमानं न स्यात्, धूम-कुर्वद्रूपवह्नित्वादिनैव वह्न्यादेर्हेतुतया विलक्षणस्वकार्यजनकत्वेन सम्भावितस्य विजातीयधूमस्यैव वह्निजन्यत्वसम्भावनायां धूमसा-मान्ये हेतुत्वानिर्णयात्, तथा च कार्यकारणभावरूपविपक्षबाधक-तर्काधीनव्याप्तिनिर्णयस्यासम्भवेनानुमानमात्रोच्छेदप्रसङ्ग इति। तेनानुमानेन विना च क्षणिकत्वस्यासिद्धिः, तस्यानुमानैकगम्यत्वात्। न च तत्र प्रत्यक्षमेव मानमिति वाच्यं, निर्विकल्पकस्यैव तन्मते वि-षयजन्यतया प्रामाण्यं, तस्य च सविकल्पकोन्नेयतया 'क्षणिकः' इति सविकल्पकस्यासिद्धावसिद्धेः। किञ्चाङ्कुरकुर्वद्रूपत्वं न जातिः शालित्वादिना सङ्करात्, शालित्वमपहाय यवे तस्य सत्त्वात्, शा-लित्वस्यापि कुशूलस्थे शालौ तदपहाय सत्त्वात्, कुर्वद्रूपे शालौ तूभयोः समावेशादिति। अत एव रजतत्वादिव्याप्यं नानैव घटत्वं, *विजातीयसंस्थानवदवयवकत्वरूपमुपाधिमादाय घट इत्यनुगत-धीरिति ॥ १६ ॥

---

* विजातीयसंस्थानं कम्बुग्रीवादि।

'नन्वस्तु क्षणिकत्वे सन्देहः, न च प्रत्यभिज्ञाबलेन स्थैर्यसिद्धौ कथं स इति वाच्यं स एवायं घट इत्यत्र सन्देहसत्त्वात्' अत्राह

स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः।
एकतानिर्णयो येन क्षणे तेन स्थिरे मतः॥ १७॥

स्थैर्ये न सन्देहस्तस्य प्रत्यभिज्ञया विषयीकरणात्, न च प्रत्यभिज्ञानरूपे, तस्यापि तदनुव्यवसायेन निर्णयात्, प्रामाण्य-मात्रेऽपि न सन्देहः विरोधात् सन्देहज्ञानस्य प्रामाण्यसन्देहे सन्देहस्याप्यसिद्धेः, प्रामाण्यस्यासिद्धौ प्रामाण्यसंशयस्याप्यभावः कोट्यनिर्णयात्। 'ननु प्रत्यभिज्ञायाः प्रामाण्ये संशयः लून-पुनर्जातकेशादौ त एवामी केशा इत्यादेर्भ्रमत्वदर्शनात्' तत्राह एकतेति। येन प्रमाणेन विरुद्धधर्मसंसर्गविरहेण, क्षणिके घटे यदि तस्मिन्नेव क्षणे न नानात्वं किन्त्वभेदः, तदा स्थिरे स्थिरपक्षेऽपि नानाक्षणवर्त्तित्वेऽपि घटस्य न नानात्वं किन्त्वेक-त्वम्, एकस्य ज्ञानस्य नानाविषयसम्बन्धवत् एकस्य नाना-कालसम्बन्धेऽपि अविरोधात्, तत्तत्कारणक्रमाधीनत्वात् त-त्तत्कालसम्बन्धस्य॥ १७॥

तदेवं परलोकसाधनमागतं। तत्रेदं शङ्क्यते 'कारणत्वं स्वाभा-विकमौपाधिकं वा, आद्ये नीलस्य सर्वान् प्रति नीलत्ववत् कार-णस्य सर्वान् प्रत्यविशेषात् कारणत्वमपि स्यात्,* द्वितीये उपाधे-रपि स्वाभाविकत्वे तद्दोषतादवस्थ्यात्, औपाधिकत्वेऽनवस्था। किञ्च कारणत्वस्य स्वाभाविकत्वे उत्पत्तेरारभ्य कार्यं स्यात्'। तत्राह

*तथा च सर्वं कार्य्यं सर्वस्य स्यादिति क्वचिदधिकं।

हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तुसत्।
तद्युक्तं तच्च तच्छक्तमिति साधारणं न किम्॥ १८॥

हेतुशक्तिं कारणत्वं, अनादृत्य अनिश्चित्य, नीलाद्यपि न वस्तुसत् न प्रामाणिकं, तथा च 'यत् पारमार्थिकं तत् साधारणं यथा नीलादि, कारणत्वञ्च यदि न साधारणम् अतो न परमार्थसत्' इत्यपि न स्यात् दृष्टान्तस्यानित्यस्य नीलस्य कारणत्वस्वीकारेण सर्वचाभावात् नित्यस्य नीलादेः प्रमाणागोचरत्वात्। किञ्चेत्याद्युक्तं दूषयति तद्युक्तमिति। तद्युक्तं सहकारियुक्तं, तत् कारणं, तच्च कार्यं, शक्तमिति नोत्पत्तेरारम्भ कारणत्वम्। कारणत्वस्य साधारण्ये च दृष्टापत्तिमाह इति साधारणं न किमिति। नीलादेरपि सर्वसाधारण्यं यत् सर्वैर्नीलत्वादिना व्यवह्रियमाणत्वं, तादृशस्य साधारण्यं सहकारियुक्तस्य, जनकत्वमित्यस्याऽपि तथाव्यवहारस्य सर्वसिद्धत्वात्॥ १८॥

'अन्यात्मनिष्ठमदृष्टं नात्मजन्यं, नित्यविभोस्तस्य कालतो देशतश्च व्यतिरेकाभावात् व्यतिरेकसहकृतान्वयस्यैव कारणताग्राहकत्वात्, तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वस्यैव कारणतात्मकत्वाच्च, तथा च समवायिकारणाभावे असमवायिकारणनिमित्ताभ्यामपि न कार्यं जननीयं तत्प्रत्यासन्नाभ्यामेव ताभ्यां जननादित्यदृष्टस्य नित्यत्वापत्तिः, तथा च न प्रतिनियतात्मदेशकालीनभोगजनकत्वं कल्प्येत' इत्यत्राह

पूर्वभावो हि हेतुत्वं मीयते येन केनचित्।

व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥ १९ ॥

व्यतिरेकगर्भं न कारणत्वं किन्त्वनन्यथासिद्धनियतपूर्वभावः, तच्च हेतौ, यतो ग्राहको न व्यतिरेकः धर्मिग्राहकमानेनापि तस्य प्रमाणत्वात् इत्यतो मीयते येन केनचित् व्यापकस्य नित्यस्यात्मनः येन केनचित् प्रमीयते, अन्यथा धर्मिधीरेव न स्यात्, तथा च धर्मिग्राहकप्रमाणसिद्धं तस्य हेतुत्वं, घटादिकं प्रति कपालादेरन्वयव्यतिरेकदर्शनात् समवेतकार्यं प्रति द्रव्यस्य द्रव्यत्वेन कारणत्वस्य कल्पनात् पृथिव्यादिबाधे परिशेषेण ज्ञानेच्छादौ पृथिव्यादिभिन्नसमवायिनः सिद्धिः । वस्तुतस्तु समवायिकारणताघटकोऽन्योन्याभावः, 'यत्र कपालं तत्र घटवदितिवत् यो न आत्मा न तत्र ज्ञानादि' इति धीसम्भवात् । एवं यो न कालस्तत्र सम्बन्धविशेषेण न घट इति निमित्तकारणस्याऽधिकरणीभूतस्य कारणताऽप्यन्योन्याभावरूपव्यतिरेकेण ग्राह्या ॥ एवञ्च मायाप्रकृत्यविद्यादिपदमप्येतत्परमिति न 'मायिकं जगत्' इत्यादिश्रुतिविरोधः, तथा चादृष्टाधिष्ठातृतया ईश्वरसिद्धिः ॥ १९ ॥

स्तवकार्थसंग्राहकश्लोकमाह

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥ २० ॥

इति प्रथमः स्तवकः ।

इति स्तवकसमाप्तौ, यस्येशस्य सहकारिशक्तिः सहकारि रूपा शक्तिः कारणम्, एषा सहकारिरूपा माया, असव सर्वकार्यापेक्षणीयत्वात्, दुरन्नेयत्वात् मादृशानमायापदेऽ लक्षणा, मूलत्वात् प्रकृतिः सैव, तत्त्वज्ञानप्रतिबध्यत्वात् सै विद्या, उदिता उक्ता, असौ देवो मम मनसि स्वविष साक्षादभिरतिं साक्षात्कारि ज्ञानं, बध्नातु जनयतु, साक्षित साक्षीभूय, निर्णायकतया साक्षित्वं, शान्तः रागादिगुणप्रू प्रपञ्चस्य मिथ्याज्ञानादेः कल्लोलः मिथ्याज्ञानपरम्परा, तव कोलाहलः किंवदन्ती सा विरता यस्मादिति ॥ २० ॥

इति श्रीहरिदासभट्टाचार्यविरचितकुसुमाञ्जलिकारि प्रथमस्तवकव्याख्यानम् ॥

# कुसुमाञ्जलिः।

---

## द्वितीयः स्तवकः।

अन्यथाऽपि परलोकसाधनानुष्ठानसम्भवादिति द्वितीयवि-प्रतिपत्तिः। 'अन्यथा ईश्वरं विनाऽपि परलोकसाधनयागाद्यनुष्ठानं सम्भवति यागादेः स्वर्गसाधनत्वस्य वेदगम्यत्वात्, नित्यनिर्दोषतया च वेदस्य प्रामाण्यं, महाजनपरिग्रहाच्च प्रामाण्यस्य ग्रह इति वेदकारणतया नेश्वरसिद्धिः, योगर्द्धिसम्पादितसार्वज्ञ्यकपिलादिपूर्वक एव वा वेदोऽस्तु' इत्यत्राह

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात्।
तदन्यस्मिन्ननिश्वासान्न विधान्तरसम्भवः॥ १॥

शाब्दी प्रमा वक्तृयथार्थवाक्यार्थधीरूपगुणजन्या इति गुणाधारतया ईश्वरसिद्धिः। 'ननु सकर्तृकेऽस्तु यथार्थवाक्यार्थधीर्गुणः, अकर्तृके च वेदे निर्दोषत्वमेव प्रामाण्यप्रयोजकमस्तु, महाजनपरिग्रहेण च प्रामाण्यग्रहः' इत्यत आह सर्गप्रलयसम्भवादिति। प्रलयोत्तरं पूर्ववेदनाशादुत्तरवेदस्य कथं प्रामाण्यं महाजनपरिग्रहस्याऽपि तदा अभावात्। शब्दस्यानित्यत्वं उत्पन्नो गकार इति प्रतीतिसिद्धं, प्रवाहाविच्छेदरूपनित्यत्वमपि प्रलयसम्भवात् नास्तीति भावः। 'कपिलादय एव

सर्गादौ पूर्वसर्गाभ्यस्तयोगजन्यधर्मानुभावात् साक्षात्कृतसकलार्थाः कर्तारः सन्तु' इत्यत आह तदन्यस्मिन्निति । विश्वनिर्माणसमर्था अणिमादिशक्तिसम्पन्ना यदि सर्वज्ञास्तदा लाघवादेक एव तादृशः स्वीक्रियतां स एव भगवानीश्वरः, अनित्यासर्वविषयकज्ञानवति च विश्वास एव नास्तीति वैदिकव्यवहारविलोप इति न विधान्तरसम्भवः ईश्वरानङ्गीकर्तृनये इति शेषः ॥ १ ॥

'ननु सर्गप्रलयसम्भवादिति न युक्तं प्रलये मानाभावात् इति । अहोरात्रस्याव्यवहिताहोरात्रपूर्वकत्वनियमात्, कर्मणां विषमविपाकतया कालोपाधित्वस्य भोगव्याप्यत्वात् युगपददृष्टस्य च वृत्तिनिरोधानुपपत्तेः, ब्राह्मणस्य ब्राह्मणजन्यत्वनियमात् सर्गाद्युत्पन्नस्य ब्राह्मणत्वाभावात् उत्तरकालेऽपि ब्राह्मणव्यवहारानुपपत्तेः, प्रयोज्यप्रयोजकयोरभावात् सङ्केतग्रहाभावे शब्दव्यवहारानुपपत्तेः, घटादिनिर्माणे नैपुण्यस्य पूर्वदर्शनसापेक्षस्य सर्गादावभावात् घटादिसम्प्रदायोच्छेदादित्यादेर्बाधकाच्च' तत्राह

वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥ २ ॥

यथा वर्षादिनस्याव्यवहितवर्षादिनपूर्वकत्वे साध्ये राशिविशेषावच्छिन्नरविकालपूर्वकत्वमुपाधिस्तथाऽहोरात्रस्याव्यवहिताहोरात्रपूर्वकत्वेऽव्यवहितसंसारपूर्वकत्वमुपाधिः, भवोपाधिः संसारावच्छेदककालोपाधिः स एव उपाधिरित्यर्थः । सुषुप्ति-

काले कतिपयव्यक्तिनिष्ठभोगजनकादृष्टनिरोधवत् कालविशे-
षात् समस्तात्मनां समस्तादृष्टनिरोधस्तदिदमुक्तं वृत्तिरोधः
सुषुप्तिवदिति। उद्भित् शाकविशेषः, तस्य यथा तण्डुलकणात्
शाकविशेषबीजाच्च उद्भवः, यथा वा वृश्चिकस्य गोमयाद्वृश्चि-
काच्च उद्भवस्तथा कालविशेषेऽदृष्टविशेषात् केवलात् इदानीन्तु
ब्राह्मणात् ब्राह्मणोत्पत्तिः, वैजात्यस्य कार्यतावच्छेदकत्वात् न
व्यभिचारः। यथा मायावी सूत्रसञ्चाराधिष्ठितदारुपुत्रकं
कृत्वा दारुपुत्रकं घटमानयेत्यादि नियोज्य घटानयनं सम्पाद्य
बालकस्य व्युत्पत्तौ प्रयोजकस्तथेश्वरोऽपि प्रयोज्यप्रयोजकभा-
वापन्नं शरीरद्वयं परिगृह्य व्यवहारं कृत्वा तदानीन्तनानां
शक्तिं ग्राहयति। एवं घटादिसम्प्रदायमपि स्वयं कृत्वा शिक्ष-
यति, तदिदमुक्तं मायावत् समयादय इति। समयः शक्ति-
ग्रहः॥ २॥

कापके निरस्ते बाधकमप्याह

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्॥ ३॥

सम्प्रदायस्य वेदादिसम्प्रदायस्य ह्रासोऽनुमीयतां, कुतः
जन्मादेर्ह्रासदर्शनात्। प्रयोगस्तु, वेदादिसम्प्रदायोऽयमत्यन्त-
मुच्छिद्यते ह्रसमानत्वात् प्रदीपवत्। स्वरूपासिद्धिमुद्धारयाह
जन्मेति। पूर्वं मानस्यः प्रजास्ततः पुत्रमात्रार्थितप्रयुक्तमैथुनजाः
सम्प्रति सम्भोगकामिप्रवृत्त्यावर्जितजन्मान इति जन्मह्रासः।
पूर्वं चरुप्रभृतिषु संस्कारः ततो गर्भे ततो जननानन्तरम्

इदानीं कथञ्चिदिति संस्कारह्रासः । पूर्वं सहस्रशाखस्य चतुर्वेदस्याध्ययनं तत एकस्याः शाखाया इत्यादिक्रमेण विद्याह्रासः । विद्यादेरित्यादिना वृत्तिधर्मादिसंग्रहः, पूर्वमुञ्छशिलवृत्तयस्ततोऽयाचितवृत्तयस्ततः कृष्यादिवृत्तयस्ततः सेवावृत्तय इति वृत्तिह्रासः । पूर्वं तपोज्ञानयज्ञदानात्मकश्चतुष्पाद्धर्मस्ततस्त्रेतादौ एकैकह्रासः कलौ च विसंष्ठुलः खलद्धानैकपादिति धर्मह्रासः । पूर्वं यज्ञशेषभुजस्ततोऽतिथिशेषभुजस्ततः स्वार्थसाधितभुजस्ततो भृत्यादिसहभुज इत्यपि धर्मह्रासः । स्वाध्यायस्याध्ययनस्य कर्मणो यागादेः शक्तेः सामर्थ्यस्य ह्रासात्, अध्ययनशक्तेः कारणस्य ह्रासात् विद्याशक्तेः कार्यस्य ह्रास इति पृथङ्निर्देशः । एवञ्च ब्रह्माण्डनाशे तदन्तर्गतप्राणिनां नाश इति प्रलयसिद्धिः । भक्ष्यपेयाद्यद्वैतरागजीविकाकुतर्काभ्यासव्यग्रताभिसन्धिपाषण्डसंसर्गप्रतारणादिनिबन्धनान्या या प्रवृत्तिर्यागादौ तद्वान् महाजनः, तत्परिग्रहात् वेदप्रामाण्यमिति ॥ ३ ॥

स्तवकार्थसंग्राहकश्लोकमाह

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवम्
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेऽष्वपि ॥ ४ ॥

इति द्वितीयः स्तवकः ।

# कुसुमाञ्जलिः।

## तृतीयः स्तवकः।

तदभावावेदकप्रमाणसम्भवादिति तृतीयविप्रतिपत्तिः। 'भूतले घटाभाववदीश्वरस्याप्यनुपलब्धेरभावस्य ग्रहात्, परमात्मनोऽयोग्यतया योग्यानुपलब्धेरभावात् नाभावग्रहो यदि तदा शशशृङ्गस्याप्ययोग्यस्य नाभावः सिध्येत्' इत्यत्राह

योग्याऽदृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम्।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम्॥ १॥

अयोग्ये परमात्मनि योग्यानुपलब्धिः कुतः, सैव बाधिका, या चास्ति सा न बाधिका, अन्यथाऽऽकाशधर्माधर्मादिविलयापत्तेः। शृङ्गन्तु योग्यमेव तथा च कुतः प्रतिबन्धिः। अयोग्यन्तु शशशृङ्गं न बाध्यते किन्तु साधकाभाव एव तत्र। प्रकृते पञ्चमस्तवके साधकस्य वक्तव्यत्वात्। 'ननु कर्तृत्वव्यापकशरीरप्रयोजनाभिसन्धानयोरभावात् ईश्वरस्याभावोऽनुमेयः' इत्यत्राह क्वानुमानमनाश्रयमिति। ईश्वरस्याश्रयस्य पक्षस्यासिद्धेः, सिद्धौ च धर्मिग्राहकमानेन अनुमानबाध एव॥ १॥

'ननु असत्ख्यात्युपनीत ईश्वरस्तत्र कर्तृत्वाभावः तस्यैव वाऽभावः साध्यः' इत्यत्राह

व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता॥ २॥

व्यावर्त्यः प्रतिषेध्यः, तदभाववत्ता भाविकी पारमार्थिकी हि यतः विशेष्यता अभावस्याश्रयता, तथा चालीकं न विशेष्यमित्यर्थः । अभावविरहात्मत्वं प्रतियोगित्वमवस्तुनो नेति नालीकस्य प्रतिषेधाधिकरणत्ववत् प्रतिषेध्यत्वमपीति भावः ॥ २ ॥

'ननु अयोग्यस्याप्यनुपलब्ध्या कथं नाभावग्रहः' इत्यत आह

दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति साऽनुपलम्भने ॥ ३ ॥

योग्यानुपलब्धिरेवाभावग्राहिका, अन्यथाऽतीन्द्रियमात्रोच्छेदापत्तेः । योग्यता च प्रतियोगितद्व्याप्येतरयावदुपलम्भसामग्रीसमवधानम्*, एवञ्च शशशृङ्गे योग्यता दुष्टा दोषघटिता उपलम्भसामग्री वाच्या, तस्यां सत्यामनुपलब्धिर्न किन्तूपलब्धिरेव स्यात्, अदुष्टे च सा योग्यता नास्तीति ॥ ३ ॥

'नन्वात्मा किञ्चिदनभिज्ञः स्वनिष्ठकर्त्तृत्वानिरूपकक्षितिको वा आत्मत्वात्' इत्यत्राह

---

* प्रतियोगितद्व्याप्याभ्यां इतरा यावती उपलम्भस्य प्रतियोगिप्रत्यक्षस्य सामग्री कारणसमूहस्तस्याः समवधानं मिलनमित्यर्थः । एतादृशयोग्यतासहिता अनुपलब्धिः असद्विषयस्थले कदापि न सम्भवति । तथा हि प्रत्यक्षस्य द्विविधा सामग्री प्रमास्थले विषयसहितः चक्षुरादिकारणकलापः, भ्रमस्थले च विषयरहितः पित्तादिदोषसहितः चक्षुरादिकारणसमुदायः । तत्र प्रथमा विषयसहिता द्वितीया च सर्वदैव विषयरहिता इति फलितं, एतयोरन्यतरसत्त्व एव प्रत्यक्षं जायते । शशशृङ्गस्य असद्रूपत्वेन तत्प्रत्यक्षसामग्री द्वितीया वाच्या, तत्सत्त्वे च शशशृङ्गस्य प्रत्यक्षमेवेति न प्रत्यक्षाभावरूपानुपलब्धिः, तदसत्त्व च तत्स्वरूपा उक्तयोग्यतैव नास्तीति विसंवादेन शशशृङ्गादिस्थले योग्यतासहिता अनुपलब्धिः न कदापि सम्भवतीति भावः ॥

इष्टसिद्धिः प्रसिद्धेऽंशे हेतुसिद्धिरगोचरे।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥ ४ ॥

प्रसिद्धे संसार्यात्मनि पक्षे इष्टसिद्धिः सिद्धसाधनम्, अगोचरे अज्ञाते ईश्वरे हेतुसिद्धिः हेतोरज्ञानं, आत्मत्वेन सामान्यतः सिद्धः पक्षश्चेत् तत्राप्यस्मदादिस्तदितर आत्मा वा पक्ष इति विकल्पे सिद्धसाधनं हेतुसिद्धिर्वा। 'नन्वात्मत्वं जातिः पक्षः' तत्राह जातावपि तथैव सेति। आत्मत्वं जातिर्न क्षिति-कर्त्री इत्यत्रेष्टसिद्धिः सिद्धसाधनं, हेतोश्च तत्रासत्त्वमिति हेतु-सिद्धिरित्यर्थः॥ ४ ॥

'नन्वागमादिसिद्धात्मनि अकर्तृत्वं साध्यं' तत्राह

आगमादेः प्रमाणत्वे बाधनादनिषेधनम्।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥

आगमादेः प्रमाणत्वे ततएव ईश्वरस्य कर्तृत्वादिसिद्धौ कर्तृत्वाद्यभावसाधने बाधः। आगमादेरप्रमाणत्वे सैवाश्रयासिद्धिः उद्धता उत्कटा ॥ ५ ॥

अत्र चार्वाकाः "योग्यताविशेषणेन किं,'यन्न प्रत्यक्षं तन्नास्ति' इत्यनुपलब्धिमात्रमेव बाधकं स्यात्, अनुमानविलोपस्येष्ट एव धूमदर्शनानन्तरं वह्न्यर्थप्रवृत्तिश्च सम्भावनामात्रात्" इति तत्राह

दृश्यादृश्योर्न सन्देहो भावाभावविनिश्चयात्।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

सम्भावना हि सन्देहः, स च दृष्टे नास्ति तस्य निश्चयात्, अदृष्टे च नास्ति अनुपलब्धौ तदभावस्यैव निर्णयात्। एवम-

दृष्या अनुपलब्ध्या, हेतौ प्रत्यक्षकारणे चक्षुरादौ बाधिते सति प्रत्यक्षमपि प्रमाणं न स्यात्, अनुपलब्धिकालेऽपि तस्य सत्त्वे तु व्यभिचारात् नानुपलब्धिरभावावधारणे हेतुः। एवञ्च गृहा-न्निर्गतश्चार्वाकः पुत्त्रदाराद्यभावमवधार्य्य विक्रोशेत्, परावृत्तो ऽपि कुटुम्बं नासादयेत्, तदा तेषां सत्त्वे चानुपलब्धिर्व्यभिचा-रिणी न हेतुः स्यादिति ॥ ६ ॥

'ननु यद्यनुपलम्भमात्रं नाभावसाधकं तदा अयोग्योपाधि-शङ्कया धूमादावपि व्यभिचारशङ्कया न व्याप्तिनिश्चयः स्या-दिति गतमनुमानेन' इत्यत्राह

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥

तद्देशतत्कालयोर्व्यभिचाराभावनिश्चयात् कालान्तरदेशा-न्तरस्थयोर्व्यभिचारशङ्का स्यात् कालान्तरदेशान्तरस्यज्ञान-स्यानुमानादेवेति सिद्धमनुमानं। शङ्का न चेत्, ततः शङ्का-विरहे तरां सुतरामनुमानम्। 'ननु किं शङ्कानिवर्त्तकं' तत्राह तर्कः शङ्कावधिर्मत इति। विपक्षबाधकतर्काच्छङ्काविरहो मतः सम्मतः इत्यर्थः। 'ननु तर्कस्यापि व्याप्तिमूलकत्वेऽनवस्था' इत्यत्राह व्याघातेत्यादि। तर्कमूलव्याप्तौ न शङ्का व्याघातात्, कृप्तकारणं विना कार्य्योत्पत्तिशङ्कायां तृप्त्यर्थं भोजनादौ पर-प्रतिपत्त्यर्थञ्च शब्दप्रयोगादौ न प्रवर्त्तेतेति। एवञ्च तर्कानवतारे शङ्कितोपाधिरेवाप्रयोजक इत्युच्यते। तदुक्तं 'यावच्चाव्यति-रेकित्वं शतांशेनापि शङ्क्यते। विपक्षस्य कुतस्तावद्धेतोर्गमनि-

कावत्वम्'। विपक्षस्य विपक्षे हेतोरव्यतिरेकित्वं सत्त्वं यावच्छङ्क्यते तावद्धेतोर्न गमकत्वमिति भावः। व्यभिचारशङ्का च उपाधिशङ्काधीना। तदुक्तम् 'अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः। तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा' इति। अन्ये केचन हेतवः परप्रयुक्तानां व्याप्तीनामुपजीवकाः, तथा हि उपाध्यवच्छिन्नहेतुनिष्ठा व्याप्तिः हेतुतावच्छेदकावच्छिन्नहेतुवृत्तितया ज्ञायते, अत एव उप समीपवर्तिनि स्वसमानाधिकरणे स्वधर्मं व्याप्तिं आदधाति बोधयतीति उपाधिशब्दो जवाकुसुमादिसाधारणः, तैः सोपाधिभिर्दृष्टैरपि पक्षे व्यापकांशस्यावधारणा निश्चयो नेष्यते साधारणधर्मेण साध्यसंशयजननादित्यर्थः॥ ७ ॥

'ननूपमानमीश्वरे बाधकं स्यात्' अत्रोपमानस्यातिरिक्तप्रमाणस्यानभ्युपगमात् न बाधकत्वमिति वैशेषिकादयः। तत्र सादृश्यस्य पदार्थान्तरस्य ग्राहकमुपमानमिति केचित्, सादृश्यं न द्रव्यं गुणः कर्म वा गुणसमवेतत्वात्, न सामान्यं सप्रतियोगिकत्वात्* सामान्यादिवृत्तित्वाच्च, नाभावः सप्रतियोगिकत्वेनाप्रत्ययात्। तच्च न प्रत्यक्षगम्यमिन्द्रियपातमात्रेणाप्रतीतेः, नापि प्रतियोगिज्ञानसहकृतमिन्द्रियं ग्राहकमिति वाच्यं गोसदृशो गवय इति ज्ञानानन्तरं सा गौर्गवयसदृशीत्यसन्निकृष्टगोविशेष्यकग्रहस्याप्रत्यक्षत्वात्, नाप्यनुमानगम्यं लिङ्गाप्रतिसन्धानेऽपि ज्ञायमानत्वात्, न शब्दगम्यं तस्यासार्वत्रिकत्वादिति तत्राह

---

* उपमानसापेक्षत्वात्।

परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥

न प्रकारान्तरस्थितिः न नोभयात्मकत्वं*, हि यतः, परस्परविरोधात्, नैकतापि न भावाभावात्मकत्वमपि, विरुद्धानामिति हेतुगर्भविशेषणं परस्परविरोधिरूपत्वात्। विरोधमेव प्रतिपादयति उक्तिमात्रविरोधतः। नाभाव इत्युक्ते च भावत्वप्रतीतेः कथमभावता, न भाव इत्युक्ते चाभावत्वप्रतीतेर्न भावत्वम्। अयमभिप्रायः सादृश्यं भावोऽभावो वा उभयकोव्यतिरिक्तस्याप्रसिद्धेः, अभावत्वे सप्तमपदार्थत्वं भावत्वे च गुणवत्त्वे द्रव्यत्वं निर्गुणत्वे सामान्यवत्त्वे च गुणान्यत्वे कर्मत्वं तदन्यत्वे गुणत्वं निर्गुणनिःसामान्यभावत्वेऽसमवेतत्वे च समवायत्वं समवेतत्वे च अनेकाश्रितत्वे सामान्यत्वं एकाश्रितत्वे विशेषत्वम्। एवं शक्तिसङ्ख्यादयोऽपि पदार्था निराकार्याः ॥ ८ ॥

ननु भवतु सादृश्यं समानधर्म एव, तद्ग्राहकमेवोपमानं मानान्तरं स्यात्' इत्यत्राह

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥

अयं गोविसदृश इति ज्ञानानन्तरं सा गौरेतद्विसदृशीति धीः प्रमाणान्तरादेवास्तु। अथ 'एतस्य तद्वैधर्म्यं तस्मिन्नेतद्वैधर्म्यं विनाऽनुपपन्नमित्यर्थापत्तिरेव' इति, गोसादृश्यं गवयस्य गो-

* नोभयात्मकत्वं उभाभ्यामन्यत्वमित्यर्थः ।

गवयसादृश्यं विनाऽनुपपन्नमित्यर्थापत्तिरेवेति न मानान्तरं सादृश्यग्राहकं मन्तव्यमिति ॥ ९ ॥

वैशेषिकादिभिरुपमाने दूषिते नैयायिकः प्राह

सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।

प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥

फलमित्यनन्तरं इतीत्यध्याहार्यं, संज्ञाया गवयादिसंज्ञायाः, संज्ञिना गवयत्वादिविशिष्टेन सह, सम्बन्धस्य शक्तेः, परिच्छेदः निश्चयः, उपमानस्य मानान्तरस्य फलमुपमितिः, प्रत्यक्षादेरसाध्यत्वात् इन्द्रियलिङ्गशब्दानामसामर्थ्यात् ॥ १० ॥

"ननु गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यादेव शक्तिधीरस्तु, 'गवयत्वविशिष्टो धर्मी गवयपदवाच्यो गोसदृशत्वात्' इत्यनुमानाद्वाऽस्तु" तत्राह

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।

समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा ॥ ११ ॥

समयः गवयत्वादिजातिपुरस्कारेण शक्तिरूपसम्बन्धः, स च दुर्ग्रहः शब्दादनुमानाद्वा न सम्भवति, गवयत्वस्य तेन पुराऽगृहीतत्वात् । न च सादृश्यमेव प्रवृत्तिनिमित्ततया गृह्यतां *तस्य गुरुत्वेनाप्रवृत्तिनिमित्तत्वात् ॥ ११ ॥

'ननु प्रथमतो गवयत्वस्याप्रतीतत्वेऽपि यदा गवयत्वं प्रत्यक्षं

---

* तस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपसादृश्यस्य, अप्रवृत्तिनिमित्तत्वात् शक्यतानवच्छेदकत्वात्, सम्भवति लघौ धर्मे गुरुधर्मो नावच्छेदक इति नियमात् ।

तदा गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यात्लक्षणया गवयत्वपरात् तेन रूपेण शक्तिधीरस्तु' तत्राह

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।
पदार्थान्वयवैधुर्यात् तदाक्षिप्तेन सङ्गतिः॥ १२॥

गोसादृश्यसामानाधिकरण्येन गवयपदवाच्यत्वविषयकज्ञानजनकतया शब्दस्य गवयत्वादिना शक्तिबोधे नाकाङ्क्षा अन्वयस्य पर्यवसानात्, यत्र पदार्था एवान्वयविधुराः केनापि रूपेणान्वयायोग्याः तत्र तदाक्षिप्तेन तेन लक्षणीयेनार्थेन सङ्गतिरन्वयः यथा गङ्गायां घोष इत्यादौ॥ 'ननु गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादिति सामान्यतो दृष्टमनुमानमितरप्रवृत्तिनिमित्तकत्वबाधे गवयत्वस्य प्रवृत्तिनिमित्तत्वमवगाहतां' इति चेन्न व्यापकतावच्छेदकरूपेणैवानुमितेर्व्यापकविषयकत्वात्। 'गवयपदं गवयत्वप्रवृत्तिनिमित्तकम् इतराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वात्' इति व्यतिरेकि च साध्याप्रसिद्धा न सम्भवति, व्यतिरेकव्याप्त्यप्रतिसन्धानेऽपि गवयत्वाश्रयो गवयपदवाच्य इति धियोऽनुभवसिद्धत्वाच्च उपमानं प्रमाणान्तरम्। एवं धिक्करभमतिदीर्घग्रीवमतिकठोरकण्टकाशिनमपसदं पशूनामित्यादिवाक्यार्थज्ञानानन्तरं तादृशपिण्डदर्शने करभपदवाच्यताग्रहोऽप्युपमानादेवेति। उपमानं तु शक्तिमात्रपरिच्छेदकतया नेश्वरे बाधकमिति भावः॥ १२॥

'शब्दस्तु नेश्वरे बाधकत्वेन शङ्कनीयः अनुमानानतिरेकात्

इति वैशेषिकाः, "पदश्रवणानन्तरं पदार्थस्मरणे 'एते पदार्थाः परस्परं संसर्गवन्तः आकाङ्क्षायोग्यतासत्तिमत्पदस्मारितत्वात् दण्डेन गामभ्याजेतिपदस्मारितपदार्थवत्' (१) इत्यनुमानात् संसर्गसिद्धेः, किं वा 'एतानि पदानि स्मारितपदार्थसंसर्गप्रमा-पूर्वकाणि आकाङ्क्षादिमत्पदत्वात्' (२) इत्यनुमानात् तत्सिद्धेः, ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमात्*" इति, अत्राह

अनैकान्तः परिच्छेदे† सम्भवे च न निर्णयः ।

आकाङ्क्षा सत्तया‡ हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥

अत्र पदार्थपक्षकानुमाने (१) संसृष्टा एवेति यदि संसर्गवत्त्वं साध्यते, सम्भावितसंसर्गका इति संसर्गस्वरूपयोग्यत्वं वा, आद्ये पयसा सिञ्चतीत्यादावनैकान्तः§, द्वितीये न संसर्गनिर्णयः, अन्वयप्रयोजकरूपवत्त्वरूपयोग्यताया हेतुविशेषणीकृतत्वेन सि-द्धसाधनञ्च‖ । द्वितीये प्रयोगे (२) आकाङ्क्षा सत्तया इति । आकाङ्क्षा हि समभिव्याहृतपदस्मारितपदार्थजिज्ञासा, घटमि-त्युक्ते आनय पश्येति, आनयेत्युक्ते घटं पटं वेति जिज्ञासादयः ।

---

* ज्ञानस्य प्रकृते पदार्थसंसर्गप्रमाया यत् ज्ञानं उक्तानुमितिरूपं तस्य, तस्य उक्तसंसर्गप्रमारूपज्ञानस्य यो विषयः संसर्गरूपः स एव विषयो यस्य तत्त्वनियमादित्यर्थः, अयं भावः संसर्गप्रमापूर्वकत्वज्ञानं संसर्गरूपविशेषणगोचरमेवेति न पुनःसंसर्गज्ञानाय प्रमाणान्तरा-पेक्षा इति ।

† परिच्छेदे नियमे ।

‡ सत्तया विद्यमानया, न तु ज्ञातया ।

§ करकादिस्थिरजलेन सेकासम्भवात् ।

‖ अन्वयप्रयोजकरूपं प्रकृते पयस्त्वादि, अयम्भावः हेतुविशेषण-तयैव साध्यस्य सिद्धौ पुनः साधनापेक्षैव नास्तीति ।

'ननु योग्यतासहिता आसत्तिरेव हेतुरस्तु', तत्राह योग्यासत्तिरसन्धना इति व्याप्तिशून्या, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र निराकाङ्क्षयोराजपदपुरुषपदयोर्व्यभिचारात्
॥ १३ ॥

प्राभाकरास्तु "वेदस्यापौरुषेयतया तत्र वक्तृज्ञानानुमाना-सम्भवात् शब्दः प्रमाणं, लोके तु आप्तोक्तत्वज्ञानमपेक्षितं, तथाच 'अयं वक्ता स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् भ्रमाद्य-जन्यवाक्यार्थज्ञानजन्यवाक्यप्रयोक्तृत्वात्' इत्यनुमानाद्वक्तृज्ञानाव-च्छेदकतया,* उत्तरकालं वा 'एते पदार्थाः परस्परं संसृष्टाः वक्तृयथार्थज्ञानविषयत्वात्'इत्यनुमानात् साक्षात् वाक्यार्थसिद्धेः, क्लृप्तसामर्थ्यात् शब्दात् पुनरन्वयधीरित्यनुवादको लौकिकः शब्दो न प्रमाणं" इति† प्राहुः, तत्राह

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥

वेदेऽवधारितसामर्थ्याच्छब्दाल्लोकस्थलेऽपि प्रागर्थनिर्णये लिङ्गस्यैवानुवादकत्वं, व्याप्तिस्मृतिविलम्बेनानुमानस्य शब्दापेक्षया विलम्बितधीजनकत्वात् ॥ १४ ॥

'नन्वाप्तोक्तत्वस्य संशये व्यतिरेके च शाब्दज्ञानानुत्पत्त्या निर्णयो हेतुर्वाच्यः,आप्तोक्तत्वञ्च प्रकृतवाक्यार्थगोचरयथार्थधीजन्यत्वमिति, वाक्यार्थधीः प्रथमतोऽनुमानादेव वाच्या' इति, अत्राह

---

* अवच्छेदकतया विशेषणविधया, अस्य 'सिद्धेः' इत्यनेनान्वयः।

† अगृहीतग्राहित्वं प्रमात्वमिति प्राभाकरसिद्धान्तः।

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥

आप्तोक्तत्वनिश्चयस्य हेतुत्वे मानाभावः, बाधकप्रमाविरह-रूपयोग्यताज्ञानविलम्बादेवायोग्येऽन्वयधीविलम्बसम्भवात्, अन्यथा वेदेऽपि अपौरुषेयत्वधीर्हेतुरस्तु, तथाच तत्रापि 'अमी वैदिका अर्था 'अन्विताः' परस्परं संसृष्टाः व्यस्तपुंदूषणाशङ्कैः पदैः स्मारितत्वात्' इत्यनुमानात् संसर्गे निर्णीते तत् अनुवादकत्वं वेदस्यापि न कुतः ।

यत्तु "पदं न करणं किन्तु पदार्थ एव, अत एव पदार्थकरणकवाक्यार्थज्ञानात् कविकाव्यादिकं,* द्वारमित्यत्र द्वारोपस्थितावपि पदार्थनिष्ठाकाङ्क्षाविरहेणान्वयाबोधः,† 'शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते' इति न्यायात् । अतएव 'पदार्थानामवच्छेदकत्वं पदजन्योपस्थितिं विना पदार्थान्वयाबोधात्,‡ तदुक्तम् 'प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि । पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्' । अभिधातृत्वात् पदा-

---

* तत्र हि पदं विनापि लिपिमात्रदर्शनेन वाक्यार्थबोधोत्तरमभिप्रेतार्थबोधो जायते ।

† अत्र पिधेहीतिपदाभावात् नान्वयबोध इति न, किन्तु समभिव्याहृतपदार्थजिज्ञासाभावादेव, श्रुतपदस्यार्थेन समं श्रुतपदार्थान्वय एवाकाङ्क्षादयनियमादिति भावः ।

‡ अयं भावः पदस्य व्यवहितस्यापि अन्वयव्यतिरेकाभ्यां कारणत्वं सिद्धं, पदार्थस्य पदार्थोपस्थितिविशेषणविधया कारणतावच्छेदकत्वमात्रम् ।

र्थोपस्थापकत्वात्' इति गुरुमतमपास्तं, पदानामित्यत्र आप्ता-
नामिति प्रक्षेपेणापि आप्तोक्तत्वस्यावच्छेदकत्वापातात्,* त-
थाचावश्यस्वीकार्य्यपदार्थोपस्थितौ पदमन्यथासिद्धं न कर-
णम्'' इति, तन्न पदार्थानामतीतादिरूपतया अकारण-
त्वात्, पदार्थस्मरणस्यापि निर्व्यापारतया अकरणत्वात्, पद-
ज्ञानस्यैव करणत्वात्, पदार्थस्मृतेर्व्यापारत्वात्, कविकाव्यादि-
स्थले च मानसज्ञानं† हेतुरिति ॥ १५ ॥

'ननु शब्दोऽतिरिच्यतां प्रमाणं, स एव बाधकोऽस्तु, त-
थाहि 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अह-
ङ्कारविमूढात्मा कर्त्ताहमिति मन्यते' इति गीतां पठन्ति,
प्रकृतेर्बुद्धितत्त्वस्य, गुणैः सत्त्वादिभिः, क्रियमाणानि कर्माणि
मोहादहं कर्त्तेति चेतनो मन्यते, तेनाभिमानिकं कर्तृत्वं
न पारमार्थिकं, न च सर्वज्ञस्याभिमानः विशेषदर्शनात्,
कर्त्तेति तृन्निति न षष्ठी' इति, अत्राह

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥

अयं हि सर्वकर्तृत्वाभावावेदकः शब्दः अनाप्तोक्तत्वेन प्रमा-
णं, आप्तोक्तत्वेदेतदर्थगोचरज्ञानवतो नित्यसर्वविषयकज्ञानवत्त्वम्

---

* अयं भावः यथा प्राथम्यादितोऽपि नाप्तः कारणं किन्तु आप्तोक्त-
त्वज्ञानमेव, तथा पदस्य प्राथम्यादित्वेऽपि न कारणत्वमिति ।

† पदस्येतिशेषः, हेतुः शाब्दबोधस्य हेतुः, यदा तत्र न काव्यार्थस्य
शाब्दबोधः किन्तु मानसज्ञानमेव, तदेव चमत्कारहेतुरिति ।

इन्द्रियाद्यभावात्, आगमस्य च नित्यत्वं दूषितमेव प्रागिति वेदकारो नित्यः सर्वज्ञः सिद्ध्यति ॥ १६ ॥

'नन्वसत्त्वबोधकागमानां का गतिः', तत्राह

नचासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात्।
निरञ्जनावबोधार्थो न च सन्नपि तत्परः* ॥ १७ ॥

अथावागमो नासत्त्वमात्रपर एव, सत्त्वस्यापि वक्तुः'भक्तः सर्वं प्रवर्तते' इत्यादिभिः प्रतिपादनात्, द्वयोश्च न मुख्यार्थत्वं विरोधात्, विनिगमकश्चिन्तायां विशेषगुणशून्यात्मस्वरूपस्य ध्येयत्वतात्पर्यकत्वं बाधकश्रुतीनां, साधकश्रुतीनाञ्च कार्यकारणभावादितर्कमूलकानुमानसाचिव्येन मुख्यार्थकत्वात् ॥ १७ ॥

'ननु यद्यसौ सर्वज्ञः स्यात् अनुपदिश्याऽपि प्रवर्तयेदित्युपदेशानुपपत्तिरेवास्तु ईश्वरे बाधिका, नह्ययमनुपदिश्य स्वयं प्रवर्तयितुं न जानाति सर्वज्ञत्वानुपपत्तेः, अर्थापत्तिश्च मानान्तरं', तत्राह

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा।
तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ॥ १८ ॥

प्रमाणेऽसति न प्रमा, प्रमाणरूपहेत्वभावे फलाभावात् प्रमाविरहात्, प्रमाविरहे च न प्रवृत्तिः कारणाभावात्, प्रमाकारणञ्चाग्निष्टोमेनेत्यादिविधिरेव इति नोपदेशव्यर्थता,

---

* निरञ्जनस्य निर्धर्मकस्य आत्मनः। सन्नपि सत्त्वबोधकोऽपि तत्परः असत्त्वतात्पर्यकः ॥

अन्यथा कर्मवादेऽप्ययं विधिः अदृष्टादेव प्रवृत्तेरुपपत्तेः वेदस्यानर्थक्यापत्तिः । न वाऽर्थापत्तिर्मानान्तरम् ॥ १८ ॥

तदेवाह

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥

जीवी देवदत्तो गेहे नास्तीति ज्ञानानन्तरं वहिरस्तीति धीरुदाहरणं, तत्रानियम्यस्याव्याप्यस्य नायुक्तिर्नानुपपत्तिः, अनियन्ता अव्यापको नोपपादकः, व्यापकव्यतिरेकेण व्याप्यस्यैव व्यतिरेकात्, तादृशानुपपत्तिज्ञाने व्यतिरेकव्याप्तिधीरेव ।

यदपि 'क्वचिदस्ति गेहे नास्तीतिज्ञानानन्तरं विरोधज्ञानेऽविरोधाय गेहान्यविषयता क्वचिदस्तीत्यस्येत्यर्थापत्तिः' इति, तदपि न, न हि वास्तवो मानयोर्विरोधः, तथा सति एकं मानं भज्येत, विरोधज्ञानस्य तु विषयभेदव्यवस्थापकत्वमनुमानविधयैव, तथाहि विरोधो भिन्नविषयकः एकविषयतायां विरुद्धत्वे सति प्रमाणसिद्धत्वादिति, अन्यथा धूमोऽप्यनुपपद्यमानो वह्निं गमयेदित्यर्थापत्तिरिति प्रसिद्धमप्यनुमानं न स्यात्, अर्वाग्भागावच्छेदेन वह्न्यनुपलम्भः धूमस्य वह्निसाधनमिति विरोधेऽपरभागावच्छेदेन वह्निव्यवस्थापनमप्यर्थापत्तेरेव स्यात्, अनुमानाभावेऽपि च व्याप्तिग्राहकमानस्य वह्निसाधकत्वमर्थापत्तेरित्यनुमानविलोपः स्यादिति ॥ १९ ॥

अनुपलब्धिश्च नेश्वरे बाधिकेति योग्यादृष्टिरित्यादिनोक्तम्, वस्तुतोऽनुपलब्धिर्मानान्तरमेव नेत्याह

प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः* ॥ २० ॥

यत्राज्ञातानुपलब्धिः कारणं तत् प्रत्यक्षं, ज्ञातानुपलब्धिजन्याभावज्ञानस्यानुमानत्वात्, अन्यापरोक्षज्ञानस्य इन्द्रियजन्यत्वात्, अपरोक्षत्वस्य ज्ञानकरणकान्यत्वं, घटादिप्रत्यक्ष इव घटाभावाध्यक्षेऽपीन्द्रियस्यान्यानुपक्षीणत्वात् करणत्वं, अधिकरणप्रत्यक्षाभावेऽपि शब्दादिध्वंसस्य,वायौ रूपाभावस्य च ग्रहात् अधिकरणग्रहेऽप्यनुपक्षयात्, अज्ञातकरणजन्यज्ञानत्वेन इन्द्रियजन्यत्वानुमानाच्च, भावावेशाच्च 'चेतसः' मनसः, अस्मदादिवाह्यानुभवस्य भावभूतकरणसचिवमनोजन्यत्वनियमात् नानुपलब्धिः करणं किन्त्विन्द्रियमेवेति ॥ २० ॥

साधकान्तरमाह

प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः ।
अधाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥

इन्द्रियाणि करणमिति साध्यं, प्रतियोगिग्राहकत्वात्, यथाऽनुमानं घटस्येव तदभावस्यापि ग्राहकं तद्वदिन्द्रियमपि । 'ननु प्रतियोगिग्राहकत्वमतन्त्रं, अनन्यथासिद्धत्वस्योपाधित्वात्, आश्रयग्रहेण इन्द्रियस्यान्यथासिद्धेः' इत्यत आह व्यापाराव्यवधानत इति । व्यापारेणाधिकरणप्रत्यक्षेण इन्द्रियस्यान्यथा-

---

* अयं भावः अभावज्ञानस्य प्रत्यक्षत्वं तत्र च अनुपलब्धेर्हेतुत्वं उभयवादिसिद्धं, विशेषस्त्वयं पूर्वपक्षवादिनयेऽनुपलब्धिरेव करणं नत्विन्द्रियं, सिद्धान्तस्तु प्रत्यक्षसामान्यस्येव इन्द्रियं करणमतो भावप्रत्यक्षेऽपि तदेव करणमिति ॥

मिद्धभावात्, अन्यथा संयोगेन चक्षुरादिकमन्यथासिद्धं भाव-ग्रहेऽपि स्यात् । किञ्चाभावभ्रमस्य दुष्टकरणजन्यत्वमवश्यं वाच्यं, दोषश्चेन्द्रियादिनिष्ठ एव, अनुपलब्धेर्दोषवत्त्वाभावात्, पित्तादिना इन्द्रियस्यैव दुष्टत्वात्, तदिदमुक्तम् अचाश्रयत्वाद्दोषाणामिति । अधिकरणाभावयोर्विशिष्टधीर्नेन्द्रियजा अभावधीत्वात्, नानुपलब्धिकरणजा भावधीत्वात् अतो विशिष्टग्राहीन्द्रियं स्वीकार्यं तदिदमुक्तं विकल्पनात् विशिष्टविषयकज्ञानात्* ॥ २१ ॥

'नन्वनुपलब्ध्या घटाभावस्य ज्ञानं ततश्च घटाभाववद्भूतलमिति ज्ञानं, घ्राणजसौरभोपनयानन्तरं सुरभि चन्दनमितिचाक्षुषवत् इत्यभावग्राहिकाऽनुपलब्धिः करणतया वाच्या, निर्विकल्पकविषयीकृत एव इन्द्रियेण सविकल्पकविषयतया गृह्यते तथादर्शनात् । अभावेनेन्द्रियप्रत्यासत्तेरभावात् कथं वा प्रत्यक्षत्वं, विशेषणतायाः सम्बन्धान्तरगर्भत्वात्† अव-

---

* अयं भावः घटाभाववत् भूतलं इति विशिष्टबुद्धिर्न केवलं इन्द्रियमात्रजन्या अभावविषयकत्वात् अपि तु अनुपलब्धिरपि तत्र कारणमस्तु, तथापि तस्याः तत्र करणत्वं न सम्भवति भूतलरूपविशेष्यांशे भावग्राहितया तदंशे इन्द्रियस्य करणताया उभयवादिसिद्धत्वात् इतरांशेऽपि तस्यैव करणत्वमुचितमिति ॥

† उक्तविशिष्टज्ञाने इन्द्रियं करणमस्तु निर्विकल्पकरूपघटाभावज्ञाने तु अनुपलब्धिः करणमिति को दोषः। किञ्च अभावस्य संयोगसमवायादिसम्बन्धाभावेन कथं वा इन्द्रियसम्बद्धत्वं, याऽपि च विशेषणता साऽपि सम्बन्धान्तरसापेक्षतया न सम्बन्धत्वमुपैति, तथाहि विशेषणत्वं नाम केनापि सम्बन्धेन कस्मिंश्चिद्वृत्तित्वं, यथा संयोगसम्बन्धेन भूतले घटस्य वृत्तित्वमिति घटस्य भूतलविशेषणता, नायमभावः केनापि सम्बन्धान्तरेण कुत्रापि वर्त्तते येन तस्य विशेषणता स्यादिति पूर्वपक्षतात्पर्यम् ॥

स्वकृप्तकारणताकानुपलब्धेरेव करणत्वं नेन्द्रियस्य' इत्यत्राह

अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात्।

प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः* ॥ २२ ॥

अवच्छेदग्रहस्य प्रतियोगिग्रहस्य, अभावप्रत्यक्षहेतुत्वात् नियमतः सविकल्पकज्ञानसामग्रीसत्त्वान्न निर्विकल्पकत्वं, घटादिग्रहे तु निर्विकल्पकमेव प्रथमतः, विशिष्टज्ञानहेतुविशेषणज्ञानाभावात्, प्रतियोग्यनुपहितस्याभावस्य भानाभ्युपगमे तु अभावस्यापि निर्विकल्पकविषयतेति सिद्धसाधनम्। सम्बन्धान्तरेऽनवस्थानात् स्वरूपमेवाभावस्याधिकरणेन सम्बन्धः, वैशिष्ट्यस्याभावसम्बन्धस्याङ्गीकृतस्यापि सम्बन्धधारायामनवस्थानात् स्वरूपसम्बन्धस्वीकारस्यावश्यम्भावात्, इन्द्रियसम्बद्धविशेषणताया घटाभावादिप्रत्यक्षे सन्निकर्षतया कल्पनात्। न चेदेवं, तदाऽनुपलब्धिकरणतापक्षेऽपि अन्यप्रकारो दुर्घटः,

---

* सिद्धान्तस्त्वयं, यन्मतेऽभावप्रत्यक्षं प्रति प्रतियोगिज्ञानं कारणं, तन्मते अभावस्य निर्विकल्पकमेव नास्ति, प्रतियोगिज्ञानादेव नियमतो प्रतियोगिविशिष्टाभावज्ञानस्योदयात्, यन्मते प्रतियोगिज्ञानं न तत्र कारणं, तन्मतेऽभावस्य निर्विकल्पकसत्त्वेऽपि इन्द्रियादेव तदुत्पत्तिः सम्भवति। नापि विशेषणतायाः उक्तरूपेण सम्बन्धान्तरगर्भता, तस्याः स्वरूपसम्बन्धरूपत्वात्, स्वरूपसम्बन्धश्च नातिरिक्तः किन्तु अभावस्य अधिकरणस्य वा स्वरूपमेव, अतिरिक्तत्वे यथा संयोगस्य समवायः सम्बन्धान्तरं तथा स्वरूपसम्बन्धस्यापि सम्बन्धान्तरं एवं तस्य तस्यापीति अनवस्था स्यात्, इन्द्रियसम्बद्धेऽभावस्य तादृशस्वरूपसम्बन्धरूपविशेषणतैव सन्निकर्षः, उक्तसम्बन्धाभावे भूतले घटाभावसम्बन्धावगाहिन्याः घटाभाववद्भूतलमितिप्रतीतेः वायूरूपवान् इत्यादिवत् भ्रमत्वमापद्येतेति।

तथा हि सर्वैरेव प्रमाणैः परम्परया निर्विकल्पकविषय एव गृह्यते, अनुमानादावपि वह्न्यादेः पूर्वं कदाचिन्निर्विकल्पकस्वीकारात्, घटाभाववद्भूतलमित्यादिविशिष्टप्रत्ययबलात् अभावेनाधिकरणस्य प्राप्तेर्भवताऽपि स्वीकारात् ॥ २२ ॥

स्तवकार्थसंग्राहकश्लोकमाह

प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नाऽऽसाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवम्
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥

इति तृतीयः स्तवकः ।

यस्येश्वरस्य मुखनिरीक्षणैकविधुरैर्धर्मिग्राहकमानबाधितैः* प्रत्यक्षादिभिरात्मैव नासाद्यते, विरोधोदयो यतोऽधरोऽधः, अत एव दूरे, सर्वमनुविधेयं वश्यं यस्येति, असमा स्वच्छन्दा चेतनान्तराप्रयोज्या या लीला सैवोत्सवो यस्य स तथा, दुःखाभावैकनिदानत्वात्, अतएव उद्भवदतिश्रद्धाः, देवानामपि देवं स्तुत्यं, प्रपद्यामहे ॥ २३ ॥

॥ इति तृतीयस्तवकव्याख्यानम् ॥

---

* ईश्वरो नास्तीत्यादिरीत्या ईश्वरधर्मिकासत्त्वसाधकतया उपन्यस्तानि प्रत्यक्षादीनि प्रमाणानि स्वधर्मीभूतेश्वरसाधकप्रमाणेन बाध्यमानानि प्रमाणतामेव नासादयन्तीति भावः ।

## कुसुमाञ्जलिः।

---

### चतुर्थः स्तवकः।

सत्त्वेऽपि तस्याप्रमाणत्वादिति तुरीयविप्रतिपत्तिः। 'ई-श्वरो न प्रमाणं तज्ज्ञानस्यागृहीतग्राहित्वाभावेन प्रमात्वा-भावात्, ईश्वरस्य प्रमाकर्तृत्वं प्रमाकरणत्वञ्च नास्तीति अप्र-माणपुरुषस्य वचः कः श्रद्दध्यात्' इत्यत्राह

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक्।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

अपूर्वदृक्त्वं अगृहीतग्राहित्वं न प्रमालक्षणं धारावहन-बुद्ध्यव्याप्तेः इदं रजतमितिभ्रमातिव्याप्तेश्च। स्वमते लक्षणमाह यथार्थ इति। अनपेक्षतयेति स्मृतेः जनकानुभवसमानविष-यकतया तत्प्रामाण्याधीनप्रामाण्यकतया सापेक्षत्वात् तत्र न प्रमाव्यवहारस्तान्त्रिकाणामिति ॥ १ ॥

'ननु धारावाहिके नाव्याप्तिः, ज्ञानेन हि विषयनिष्ठो धर्मः कश्चिज्जननीयः, अन्यथा ज्ञानस्य विषयं प्रति नियमो न स्यात्*,

---

* अयं भावः घटज्ञानस्य घट एव विषयः न तु पटः इति नियमो हि तदैव उपपद्यते यदि घटज्ञानेन घटे कश्चित् विशेषः स्यात्, अन्यथा घटपटोभयं प्रत्येव ज्ञानस्य औदासीन्येन घट एव विषय इति नियमानुपपत्तिः, स च विशेषः ज्ञाततानामकः, तादृशो विशेषस्तु येन ज्ञानेन यस्मिन् जायते तस्य स एव विषयः नान्य इति मी-मांसकसिद्धान्त इति।

तथा च तमादायागृहीतग्राहित्वमेव* । किञ्च स धर्मस्तदुपादानज्ञानजन्यो न वा, आद्ये उपादानज्ञानस्य उपादानविषयतानियमार्थं धर्मान्तरस्वीकारे तत्राप्येवमित्यनवस्था, द्वितीये कार्यत्वं हेतुः तत्रैव† उपादानज्ञानजन्यत्वव्यभिचारीति नेश्वरस्य चित्यादिकर्तृतया सिद्धिः' इत्यत्राह

स्वभावनियमाभावादुपकारो हि दुर्घटः।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥

स्वभावविशेष एव विषयतानियामकः, अन्यथा ज्ञातताधानेऽपि नियमानुपपत्तिः इति स्वभाव एव नियामकस्तत्रेति । किञ्च वर्तमानविषये तदुत्पत्तावपि अविद्यमाने विषये ज्ञातताया उपादानविरहात् अनुत्पत्तौ विषयतानियमानुपपत्तिरिति स्वभाव एव तत्र नियामक इति ॥ २ ॥

'ननु क्रियया कर्मणि किञ्चिज्जननीयमितिव्याप्तेर्ज्ञानक्रिययाऽपि विषयनिष्ठो धर्मो जननीयः' इत्यत्राह

अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके‡ ॥ ३ ॥

---

* पूर्वागृहीतां प्रथमज्ञानजन्यज्ञाततामादाय द्वितीयज्ञानस्य, द्वितीयज्ञानादिजन्यज्ञाततादिकमादाय तृतीयादेरगृहीतग्राहित्वमिति भावः ।

† तत्रैव ज्ञातताानामकधर्म एव, तस्य जन्यत्वेन कार्यत्वात् ।

‡ तस्य ज्ञानस्य वैशिष्ट्यं सम्बन्धः, तत्प्रकाशत्वात् तद्विषयकत्वात् अधिके ज्ञातताारूपधर्मे न अध्यक्षानुभवः न प्रत्यक्षं प्रमाणमित्यर्थः ।

क्रिया यदि धात्वर्थस्तदा 'शरेण गगनं युनक्ति' इत्यत्र संयोगेन गगननिष्ठकिञ्चिदजननात् अनैकान्तः, यदि करण-व्यापारः क्रिया तदापीन्द्रियसंयोगादिना घटादिनिष्ठकिञ्चि-दजननात् व्यभिचारः, अथ क्रिया स्पन्दस्तदा ज्ञानस्य स्पन्दा-नात्मकत्वादसिद्धिः । 'ननु ज्ञातो घटः साक्षात्कृतो घट इत्यादि प्रत्यक्षमेव ज्ञाततायां मानं' इत्यत्राह तद्विशिष्येति। सर्वत्र विशिष्टज्ञाने विशेषणविशेष्ये तदुभयसम्बन्धो विषयः, स च सम्बन्धः क्वचित् संयोगादिः क्वचित्तु स्वरूपं, तदिह 'घट-ज्ञानं' इत्यत्रैव घटज्ञानयोः स्वरूप एव सम्बन्धः 'ज्ञातो घटः' इत्यत्रापि भासते, अन्यथा 'दृष्टो घटः' 'कृतो घटः' इत्यत्र दृष्टताकृततयोरप्यापत्तेः ॥ ३ ॥

स्वभावसम्बन्धादुपपत्तिस्तस्या तदुच्यते

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥

यथा घटादिना ज्ञाने विशिष्टधीः यथा च क्रिययैव कर्मणां घटादीनां व्यवहारेषु विशिष्टबुद्ध्यादिषु विशेषस्तथा ज्ञातो घट इत्यादौ ज्ञानेनैव घटादौ विशिष्टधीर्न धर्मान्त-रादिति* ॥ ४ ॥

---

* घटादिना विशेषणेन, ज्ञाने विशिष्टधीर्घटज्ञानमिति बुद्धिः, क्रिययैव विशेषणीभूतकृत्या एव, अस्यास्च विशेष इत्यनेनान्वयः । विशिष्टबुद्ध्यादिषु 'कृतो घटः' इति प्रतीत्यादिषु, ज्ञानेनैवेति विशे-षणेनेति शेषः, धर्मान्तरात् ज्ञाततारूपादित्यर्थः ।

'ननु तथापि नेश्वरज्ञानं प्रमा प्रमाजन्यत्वाभावात्, एवमीश्वरो न प्रमाता न वा प्रमाणं प्रमाकर्तृत्वकरणत्वयोरभावात्' अत्राह

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥

यथार्थानुभवत्वमेव प्रमात्वमजन्यत्वेऽपीश्वरज्ञानस्याविरुद्धं, प्रमातृत्वं प्रमासमवायित्वं तच्च अकारणत्वेऽपि प्रमाया ईश्वरस्याविरुद्धम्। एवं प्रमया सदायोगव्यवच्छेदेन सम्बन्धितयेश्वरस्य प्रमाणत्वमपि न तु करणत्वमपि तत्र नियामकमिति, 'मन्त्रायुर्वेदवत् तत्प्रामाण्यमाप्तप्रामाण्यात्' इति सूत्रे (न्यायसू० २।६८) ईश्वरस्य प्रामाण्यमुक्तं। न चेश्वरस्य पञ्चमप्रमाणत्वापत्त्या विभागव्याघातः प्रमाकरणाभिप्रायेण विभागसम्भवात्। न चेश्वरज्ञानस्य भ्रमविषयकत्वे भ्रमविषयावगाहित्वेन भ्रमत्वापत्तिरिति वाच्यं व्यधिकरणप्रकारकत्वाभावेनाप्रमात्वाभावात्, भ्रमनिष्ठं शुक्तिविशेष्यकत्वं रजतत्वप्रकारकत्वञ्च यदेव तदवगाहितया ईश्वरज्ञानस्य प्रमात्वाच्चतेः ॥ ५ ॥

स्तवकार्थसंग्राहकश्लोकमाह

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ ६ ॥

इति चतुर्थः स्तवकः ।

भूतार्थानुभवे यथार्थानुभवे, साक्षात्कारिणि प्रत्यक्षे, निविष्टो विषयीभूतो निखिलप्रस्ताविवस्तूनां नानापदार्थानां क्रमो यस्य स तथा अनुभवविषयसकलविश्वक इत्यर्थः, नित्ययोगिनि सदातनयुक्ते, अतएवेन्द्रियाणां द्वाराणामनपेक्षा स्थितिर्यस्य, लेशतोऽप्यंशतोऽपि अदृष्टिर्विशेषादर्शनं तन्निमित्तिका या दृष्टिः रागद्वेषमोहात्मिका तद्विगमेन प्रभ्रष्टः शङ्कातुषः वेदाप्रामाण्यशङ्कालेशो यस्मादित्यर्थः, प्रमाणं शिवः, एवम्भूते तत्राप्रामाण्यशङ्कारूपकलङ्कवद्भिः पापण्डैः किं कर्तव्यमिति भावः* ॥ ६ ॥

इति चतुर्थस्तवकव्याख्यानम् ।

---

* 'एवम्भूते' इत्यादिपाठः प्राचीनपुस्तकद्वये नास्ति ।

# कुसुमाञ्जलिः ।

---

## पञ्चमः स्तवकः ।

'तत्साधकप्रमाणाभावात्' इति पञ्चमविप्रतिपत्तिः 'नन्वी-श्वरे साधकप्रमाणमेव नास्ति' इत्यत्राह

> कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
> वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥

क्षित्यादि सकर्तृकं कार्य्यत्वात् घटवत् सकर्तृकत्वञ्च उपादान-गोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम्। आयोजनं कर्म एवञ्च सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वात् अस्मदादिशरीरक्रियावत्। धृतीति ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात् वियति विहङ्गमधृतकाष्ठवत् धृतिश्च गुरुत्ववतां पतनाभावः। धृत्यादेरित्यादिपदात् नाशपरिग्रहः, ब्रह्माण्डादि प्रयत्नवद्वि-नाश्यं विनाशित्वात् पाट्यमानपटवत्। पदात् पद्यतेऽनेनेति व्युत्पत्त्या पदं व्यवहारः, पटादिसम्प्रदायव्यवहारः स्वतन्त्र-पुरुषप्रयोज्यः व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्। प्रत्ययतः प्रामाण्यात्, वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत्। श्रुतेर्वेदात्, वेदः पौरुषेयो वेदत्वात् आ-युर्वेदवत्। किञ्च वेदः पौरुषेयो वाक्यत्वात् भारतवत्, वेद-

वाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत् । 'सङ्ख्याविशेषात्', द्व्यणुकपरिमाणं सङ्ख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणककपालद्वयारब्धघटपरिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवत्*, अणुपरिमाणञ्च न परिमाणजनकं, नित्यपरिमाणत्वात् अणुपरिमाणत्वाद्वा, एवञ्च सर्गादौ द्व्यणुकपरिमाणहेतुपरमाणुनिष्ठद्वित्वसङ्ख्या च नास्मदाद्यपेक्षाबुद्धिजा, अतस्तदानीन्तनापेक्षाबुद्धिरीश्वरस्यैवेति । विश्वविदव्यय इति विशिष्टस्याव्ययत्वं, तेन नित्यसर्वविषयकज्ञानसिद्धिः† ॥ १ ॥

'ननु शरीरविशिष्टस्य कर्तृतया विशेषणबाधात्मको विशिष्टबाध इति (१), कर्तृजन्यत्वव्यापकशरीरजन्यत्वाभावात् कर्तृजन्यत्वाभाव इति सत्प्रतिपक्षता च (२), यद्वा 'कर्ता शरीर्येव' इति व्याप्तिर्विरोधिनी (३), यद्वा व्याप्त्या यथादर्शनप्रवृत्तया शरीरी कर्ता उपनेयः, पक्षधर्मतया च क्षित्यादावशरीरीति विशिष्टसाध्याप्रसिद्धिः विशेषणविशेष्यविरोधश्च (४), यद्वा शरी-

---

* यादृशपरिमाणयुक्तेन कपालद्वयेन एको घटो जन्यते, तादृशपरिमाणयुक्तेनैव कपालत्रयेण द्वितीयोऽपि घटो जातः, परन्तु पूर्वघटपरिमाणापेक्षया द्वितीयस्य उत्कृष्टपरिमाणवत्त्वं प्रत्यक्षसिद्धमिति, तत्र कारणचिन्तायां प्रथमस्य कपालद्वयजातत्वात् द्वितीयस्य तत्त्रयजातत्वाच्च परिमाणवैलक्षण्यमित्यङ्गीकार्यं, तथा च द्वितीयघटपरिमाणं कपालगतत्रित्वसङ्ख्याजन्यमिति प्रकृतदृष्टान्तता ।

† विशिष्टस्य विश्वज्ञानवतः, अव्ययत्वं नित्यत्वं, साध्यते इति शेषः, तेनेति विशिष्टान्वयस्थले विधेयस्य विशेषणविशेष्योभयान्वितत्वनियमादिति हृदयम् ।

रजन्यत्वाद्युपाधिना व्याप्यत्वासिद्धिः (५), इति कार्य्यत्वहेतौ पञ्च दोषाः'*, तत्राह

न बाधोऽस्योपजीव्यत्वात्, प्रतिबन्धो न दुर्ब्बलैः ।
सिद्ध्यसिद्ध्योर्विरोधो न, नासिद्धिरनिबन्धना ॥ २ ॥

ईश्वरे धर्म्मिणि शरीरबाधात् कर्तृत्वबाधो (१) न, अधिकरणज्ञानं विना अभावज्ञानासम्भवात् अस्य कार्य्यत्वस्य धर्म्मिसाधकस्य† अधिकरणज्ञानजनकतया अवश्यापेक्षणीयत्वेन बलवत्त्वात्, एवञ्च न विशेषणबाधात्मको विशिष्टबाधः प्रत्यक्षात्मक इति, ईश्वरो न कर्त्ता अशरीरत्वात् इत्यनुमानबाधोऽपि नेत्यर्थः। क्षित्यादि न सकर्तृकं शरीराजन्यत्वात् इति (२) न प्रतिबन्धकं, सत्प्रतिपक्षहेतोः शरीरांशवैयर्थ्यात् व्याप्यत्वासिद्ध्या‡ दुर्ब्बलत्वात् । तृतीयेऽपि कार्य्यत्वव्याप्तेः पक्षधर्म्मत्वसहकारात् विपक्षबाधकतर्कावताराच्च§ बलवत्त्वम्, उपन्यस्तायाः 'कर्त्ता शरीर्य्येव' इति व्याप्तेर्दुर्ब्बलतया न प्रतिबन्धः। चतुर्थे च यदि पक्षधर्म्मतया अशरीरी उपस्थितस्तदा न विरोधः, कर्तृत्व-

---

* नैते पञ्चविधहेत्वाभासरूपाः पञ्च दोषा इति तदुपपादनाय यत्नेनालम् ।

† धर्म्मी ईश्वरः ।

‡ अयमभिसन्धिः, व्याप्तिलक्षणे व्याप्यतावच्छेदकधर्म्मान्तराघटितत्वरूपविशेषणसत्त्वात् शरीराजन्यत्वहेतोरजन्यतात्वरूपव्याप्यतावच्छेदकधर्म्मान्तरघटिततया व्याप्यत्वासिद्धिरिति ।

§ पक्षेति क्षित्यादिरूपपक्षेऽशरीरिकर्तृकत्वस्यैव सम्भवादित्यर्थः। विपक्षबाधकतर्कश्च उत्तरकारिकायामुक्तः ।

स्याशरीरित्वसमानाधिकरणस्योपलम्भात्, तदनुपस्थापने तु न विरोधः, विरोधाश्रयस्यासिद्धेः । पञ्चमे च विपक्षबाधकतर्कसत्त्वात् तदभावनिबन्धना अज्ञानरूपाऽसिद्धिर्व्याप्यत्वासिद्धिर्वा न, शरीरजन्यत्वोपाधेरपि विपक्षबाधकाभावेनापास्तत्वात्* ॥ ॥ २ ॥

'ननु यदीश्वरः कर्ता स्यात्, शरीरी स्यादिति प्रतिकूलतर्कावतारोऽनुकूलतर्काभावश्च', तत्राह

तर्काभासतयाऽन्येषां, तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥

प्रतिकूलतर्कास्तावदीश्वरासिद्धा आश्रयासिद्धा इत्याभासाः । कर्तारं विना कार्यं न स्यादिति तर्कस्तु 'विभूषणं' उपकारकः । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' (गीता०) इत्यागमस्य† । 'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' (मनु० अ०१२) इति तर्कानुगृहीतस्यागमस्य बलवत्त्वम् ॥ ३ ॥

'ननु कार्यत्वं प्रयत्नजन्यत्वेऽप्रयोजकम्', अत्राह

स्वातन्त्र्ये जडताहानिः, नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावः, विशेषस्तु विशेषवान्‡ ॥ ४ ॥

---

* विपक्षबाधकावतारेणापास्तत्वादिति पाठान्तरम् ।

† आगमस्येत्यस्य उपकारक इत्यग्रिमेणान्वयः ।

‡ विशेषः क्रियाविशेषश्चेष्टारूपः, विशेषवान् प्रयत्नविशेषरूपहेतुमान्, तथा च 'यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि' इति न्यायात् क्रियासामान्ये प्रयत्नसामान्यस्य हेतुत्वं सिध्यति ।

न हि कर्त्तारं हेतुं विना कार्य्यं*। परमाणोरेव चालकत्वेऽचैतन्यानुपपत्तिः, अचेतनस्य चेतनप्रेरितस्यैव जनकत्वात्। अदृष्टमपि दृष्टकारणसहकारेणैव फलजनकम्। न च 'चेष्टायामेव भोक्तृप्रयत्नो हेतुः, न तु क्रियासामान्ये' इति, चेष्टायां विशेषप्रयत्नस्य हेतुत्वेऽपि क्रियासामान्ये प्रयत्नसामान्यस्य कारणत्वानपायात्, अन्यथा वीजविशेषस्याङ्कुरविशेषे जनकत्वेनाङ्कुरसामान्यं प्रति वीजत्वेन हेतुताया अपि विलोपापत्तेः ॥ ४ ॥

'ननु धृत्यादीनां प्रयत्नजन्यत्वे किं मानम्' इति, अत्राह

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः।

विच्छेदेन पदस्यापि†, प्रत्ययादेश्च पूर्ववत् ॥ ५ ॥

धृतिविनाशयोः प्रयत्नजन्यत्वान्निरुपाधित्वं। विच्छेदेनान्तराप्रलयेन आदर्शाद्यभावात् अर्वागदर्शी नाद्यव्यवहारमूलं, व्यवहारानभिज्ञत्वादिति सर्गाद्यकालीनघटादिव्यवहारप्रवर्त्तकः पुरुषः सिध्यति। एवं प्रत्ययादेर्वेदजन्यधीप्रामाण्यादेरपि निरुपाधित्वम्‡।

अथ वा कार्य्यत्यादिकं (१का०) अन्यथा व्याख्यायते, कार्य्यं तात्पर्य्यं, तात्पर्य्यविषय एव शब्दप्रामाण्यमिति तात्पर्य्यं हि यस्य

---

* इदञ्च हेत्वभाव इत्यंशस्य विवरणम्।

† ननु घटादिव्यवहारः पूर्व्वपूर्व्वकुलालपरम्पराप्रयोज्य एवास्तु, तदर्थमीश्वरेणालमित्यत आह विच्छेदेनेति पदस्य व्यवहारस्य, अस्यापि निरुपाधित्वमित्यनेनान्वयः।

‡ अन्तराप्रलयेन तत्प्रामाण्यस्य अर्वाक्दर्शिप्रयोज्यत्वासम्भवादिति भावः।

वेदे स एवेश्वरः। आयोजनं व्याख्यानं, वेदास्तदर्थविज्ञाख्याताः महाजनपरिगृहीतवाक्यत्वात्, अव्याख्यातत्वे पदार्थानवगमेऽननुष्ठानापत्तेः, एकदेशदर्शिनश्च व्याख्यायां नाश्वासः। एवं धृतिर्धारणं, धृत्यादेरित्यादिग्रहणात् अनुष्ठानसङ्ग्रहः*। एवमीश्वरादिपदार्थतया ईश्वरसिद्धिः, तदुक्तम् 'उद्देश्य एव तात्पर्यं, व्याख्या विश्वसृजः सतो। ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः', उद्देश्य इच्छाविशेषः, एवं 'अहं सर्वस्य प्रभवः' इत्यादावहंपदं स्वतन्त्रोच्चारयितृपरं, लोकवत्त्वे सतात्पर्यकशब्दस्यैव प्रमाणत्वात् 'य एव लौकिकास्त एव वैदिकाः' इति लौकिकाश्वमादिपदवदलौकिकेऽपीयमेव व्यवस्था। प्रत्ययतः विधिप्रत्ययात्, आप्ताभिप्रायो विध्यर्थः, यस्याभिप्रायः†, स एवेश्वरः ॥ ५ ॥

प्रवृत्तिः कृतिरेवात्र, सा चेच्छातः, यतश्च सा।
तत् ज्ञानं, विषयस्तस्य विधिः, तज्ज्ञापकोऽथवा ॥ ६ ॥

विधिजन्यज्ञानात् प्रवृत्तिर्दृश्यते, सा च इच्छातश्चिकीर्षातः, चिकीर्षा च कृतिसाध्यत्वेष्टसाधनताज्ञानात्, तज्ज्ञानस्य विषयः कार्यत्वं इष्टसाधनत्वञ्च विधिरिति प्राचां मतं, स्वमतमाह तज्ज्ञापकोऽथवेति इष्टसाधनत्वानुमापक आप्ताभिप्रायो विधिप्रत्ययार्थः ॥ ६ ॥

---

* धारणं धारणाख्यसंस्कारः, वेदास्तदर्थविद्भुता अनुष्ठिता वेत्यादिरीत्या प्रयोगः।

† अभिप्राय इति वेदे इति शेषः।

प्रवृत्तिप्रयोजकेच्छाहेतुज्ञानविषयं परिशेषयति*

इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।

असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो† न सङ्करात् ॥ ७ ॥

स्पन्दस्य‡ कर्तृधर्मस्य प्रवृत्तिप्रयोजकत्वे 'आत्मानं विजानीयात्' इत्यत्राप्रवृत्तिप्रसङ्गात्, ग्रामं गच्छतीत्यतः प्रवृत्त्यापत्तेश्च। यत्नस्य विधित्वे दोषमाह अप्रवृत्तेः, आख्यातान्तरेण यत्ने बोधितेऽपीष्टसाधनत्वाप्रतिसन्धाने अनिष्टसाधनत्वज्ञाने वाऽप्रवृत्तेः। इच्छाया विधित्वे दोषमाह विरोधत इति । इच्छाया विधित्वे इच्छयैव तज्ज्ञानं जननीयं, इच्छाया ज्ञानेन चेच्छा जननीया इत्यन्योन्याश्रयः§, तदिदमुक्तं विरोधत इति। ननु 'इच्छाज्ञानं लिङा जननीयं||' इति, अत्राह असत्त्वादिति। इच्छाज्ञाने जाते प्रवृत्तिहेतुस्वरूपसदिच्छाभावात् प्रवृत्तिर्न स्यात्, इच्छायाः स्वरूपसत्या एव प्रवृत्तिहेतुत्वात्, न च लिङ्श्रवणकाले इच्छा

---

* परिशेषयति इतरस्मिन् बाधप्रदर्शनेन परिशेषात् 'आप्ताभिप्राय एव विध्यर्थः' इति व्यवस्थापयति ।

† विध्यर्थ इति शेषः ।

‡ स्पन्दस्य चेष्टादिरूपक्रियायाः । अयं भावः, स्वज्ञानद्वारा प्रवृत्तौ प्रयोजको यः, स एव विध्यर्थ इत्यविवादं, तत्र क्रियाया तयात्वे ज्ञानस्य क्रियात्वाभावेन विजानीयादित्यादौ प्रवृत्त्यनुपपत्तिः, गच्छतीत्यादौ तु गमनक्रियाया अवगमात् प्रवृत्त्यापत्तिश्चेति ।

§ अयं भावः, विध्यर्थज्ञानेनैव जायमाना इच्छा प्रवर्तयतीति नियमात् प्रवृत्त्यनुकूला इच्छा विध्यर्थज्ञानमपेक्षते, इच्छारूपविध्यर्थज्ञानञ्च मानसप्रत्यक्षरूपं स्वविषयमिच्छामपेक्षते इत्यन्योन्याश्रयः।

|| तथा च इच्छाया शाब्दबोधः, स च न स्वविषयमिच्छामपेक्षते इति न दोषः।

स्वरूपमतीत्यर्थः । 'ननु लिङेव इच्छाजनिका' इति, अत्राह प्रत्ययत्यागादिति । इच्छाकारणत्वेन गृहीतस्य प्रत्ययस्य ज्ञानस्य कारणस्य त्यागापत्तेः व्यभिचारादित्यर्थः* । 'लिङ्श्रुतिकाले सुखत्वादिप्रकारकधीजन्येच्छा लिङर्थः†' इति, अत्राह सङ्करादिति । इष्टसाधनताज्ञानस्य उपायेच्छाहेतोरवश्यंस्वीकारात्, तत्र‡ च कारणान्तराभावात् लिङ्पदमेव कारणम्, अतः फलेच्छाज्ञानं न प्रवृत्तिहेतुः, तद्विनापि प्रवृत्तिसम्भवात्, तथाच सङ्करात् इष्टसाधनत्वज्ञानरूपसाधनसहचारत्वात्, इच्छाज्ञानस्येच्छाजनकत्वे मानाभावेन तस्य लिङ्पदजन्यत्वे मानाभावाच्चेति ॥ ७ ॥

'ननु यत्नज्ञानमेव प्रवर्तकमस्तु, आख्यातान्तरस्य न यत्नवाचकम्, अनुकूलव्यापारमात्र एव आख्यातशक्तेः, रथो गच्छतीत्यादौ तथाकल्पनात्', तत्राह

कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः, पूर्वा परस्मिन् सैव भावना ॥ ८ ॥

---

* अत्रायमाशयः, नियतपूर्ववर्तिन एव कारणत्वात् इष्टसाधनताज्ञानरूपप्रसिद्धकारणाभावेऽपि केवलं लिङा इच्छोत्पत्तौ तस्य नियतपूर्ववर्तित्वाभावप्रसङ्गेन कारणतैव न स्यादिति ।

† 'फलेच्छाज्ञानं उपायेच्छां प्रति कारणं' इति मतमाश्रित्येदं, तथा च सुखरूपमुख्यफलेच्छा विध्यर्थस्तज्ज्ञानञ्च उपायेच्छायां हेतुः, सा च प्रवृत्ताविति नोक्तदोषावसर इति पूर्वपक्षः । सिद्धान्तस्तु, फलेच्छाज्ञानस्य उपायेच्छां प्रति कारणतायां प्रमाणाभावेन नोक्तप्रक्रियासम्भव इति ।

‡ तत्र इष्टसाधनताज्ञाने ।

शुद्धप्रातिपदिकार्थान्वयिनी, अतएव 'यं यं भावनाऽन्वेति, तं तं सङ्ख्याऽपि' इति, एकपदोपात्तभावनान्वयबलात्, कर्त्रादिसङ्ख्याभिधान एव च प्रथमेति। एवं कर्मापि नाख्यातपदवाच्यम्* ॥ १० ॥

'नन्वस्तु कर्मधर्मो विधिः', तत्राह

अतिप्रसङ्गान्न फलं, नापूर्वं तत्त्वहानितः।
तदलाभान्न कार्यञ्च, न क्रियाऽप्यप्रवृत्तितः ॥ ११ ॥

कर्म स्वर्गादि, तद्धर्मः कार्यत्वं यदि विध्यर्थः, तत्राह अतिप्रसङ्गान्न फलं। स्वर्गे कार्यत्वज्ञाने सति स्वर्गासाधनेऽपि प्रवृत्त्यापत्तेः। यदि कर्म अपूर्वं, तद्धर्मः कार्यत्वं विध्यर्थः, तत्राह नापूर्वं तत्त्वहानितः। शाब्दबोधात् पूर्वं नोपस्थितमित्यत एवापूर्वं, पूर्वमुपस्थितौ च न तत्त्वम्, अनुपस्थितौ च कथं तत्र शक्तिधीः। 'ननु कार्यत्वरूपेण शक्तिधीः, शाब्दबोधे तु योग्यतया अपूर्वस्य कार्यविशेषस्य भानं', तत्राह तदलाभान्न कार्यञ्चेति। नित्यनिषेधापूर्वयोरलाभप्रसङ्गात्, तत्र फलकामस्य नियोज्यस्याभावात्†। यद्वा 'ननु कार्यत्वेनोपलक्षितायामपूर्वव्यक्तौ शक्तिग्रहः, गन्धवत्त्वेनोपलक्षितायां पृथिवीत्वविशिष्टायां व्यक्तौ पृथिवी-

---

* अस्य 'ग्रामो गम्यते इत्यादिकर्माख्यातस्थले' इति आदि।

† अयं भावः, काम्यस्थले काम्यरूपभविष्यत्स्वर्गादिफलसाधनत्वेन उपस्थितानां यागादीनामाशुविनाशिनां तत्साधनत्वासम्भवेन तदन्यथानुपपत्त्याऽपूर्वं कल्प्यतां, नित्यस्य निषेधस्य च फलाभावेन तदपूर्वकल्पनायां प्रमाणाभावात् 'सन्ध्यामुपासीत' 'अष्टम्यां मांसं नाश्नीयात्' इति नित्यनिषेधस्थलीयविधिप्रत्ययस्य निरर्थकत्वापत्तिरिति।

पदस्येव*', इत्यत्राह तदसाभात्। अपूर्वत्वविशिष्टापूर्वस्यानुप-स्थितेः, गन्धवत्त्वेनापि हि पृथिवीत्वविशिष्टस्य स्मरणमनुमानं वा सम्भवति, प्रागनुभवात्, प्रकृते तथात्वेऽपूर्वत्वव्याघातादित्यर्थः । 'ननु कर्म यागादि, तद्धर्मः कार्यत्वं विधिः', तत्राह न क्रियापीति । अनिष्टसाधनताधीकाले प्रवृत्त्यदर्शनात् । अत्र अपिना नापूर्वमपि, उक्तदोषादित्यर्थः ॥ ११ ॥

'ननु करणं शब्दः, तद्धर्मोऽभिधा, तज्ज्ञानं प्रवर्तकम्', अत एवाहुः "अभिधां भावनामाहुरन्यामेव लिङादयः । अर्था-त्मभावना त्वन्या सर्वाख्यातस्य गोचरः", अभिधा यागप्रव-र्तिका इतिधीः शब्दात्, आख्यातार्थस्य उत्पादना उत्पत्त्यनु-कूलक्रियारूपा' इति, अत्राह

अप्रत्याद्प्रवृत्तेश्च नाभिधाऽपि गरीयसी ।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १२ ॥

अभिधायां मानाभावात्, अभिधाशब्दतोऽभिधाज्ञानेऽपि अप्रवृत्तेः, गरीयसी उचिता, लिङर्थतयेति शेषः । 'ननु अन्यस्य

---

* यथा हि 'गन्धवती पृथिवीपदशक्या' इत्युपलक्षणविधया शक्ति-ग्रहः, न तु 'गन्धवत्त्वेन गन्धवती पृथिवीपदशक्या' इति गन्धवत्त्वं शक्यतावच्छेदकीकृत्य शक्तिग्रहः, तथा कार्यत्वेन कार्यं विधिशक्यमिति न शक्तिधीः, किन्तु कार्यं विधिशक्यमिति उपलक्षणविधयेति भावः । सिद्धान्तस्तु पृथिवीत्वजातेः प्रागुपस्थितिसत्त्वेन तस्य शक्यतावच्छेद-कत्वे लाघवप्रतिसन्धानात् गन्धवत्त्वस्य उपलक्षणविधयैव भानं, प्रकृते-ऽपूर्वत्वस्य प्रागनुपस्थित्या नैवं सम्भवतीति ।

लिङर्थत्वे बाधात् परिशेषेणाभिधा लिङर्थः' इति, अत आह बाधकत्वेति । प्रकृतेऽपि बाधकसम्भवात्* ॥ १२ ॥

'ननु करणस्य यागादेर्धर्म इष्टसाधनत्वं विध्यर्थोऽस्तु' तत्राह

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १३ ॥

विध्यर्थस्य इष्टसाधनताया 'हेतुत्वात्' लिङ्गतयोपन्यासात्, न च स्वस्य स्वलिङ्गत्वमिति, अग्निकामो दारुणी मथ्नीयादित्युक्ते कुत इत्याकाङ्क्षायां वक्तारो वदन्ति यतो दारुद्वयमथनमग्निसाधनमिति। 'अनुमानात्' अर्थवादादिष्टसाधनताबोधानन्तरमपि विधेरनुमानात्, यदि चानुमितेनापि विधिना इष्टसाधनत्वमेव बोध्यम्, तदा तदनुमानवैयर्थ्यम्, 'तरति मृत्युं, तरति ब्रह्महत्याम्†' इत्यादौ मृत्युब्रह्महत्यासन्तरणकामोऽश्वमेधेन यजे-

---

* मीमांसकमतेनेदम्, तन्मतं यथा, धात्वर्थोत्पादानुकूलो व्यापारो भावना, सा च अर्थभावना शब्दभावना चेति द्विधा, तत्राद्या फलभावनापदाभिधेया कर्तृनिष्ठा प्रयत्नादिरूपा आख्यातप्रत्ययसामान्यस्यार्थः, अस्याश्चांशत्रयमस्ति, तथा हि 'स्वर्गकामो यजेत' इत्यादावाख्यातेन भावनायामुपस्थितायां किं भावयेत्, केन भावयेत्, कथं भावयेदित्याकाङ्क्षायां स्वर्गकामपदादिभिः, 'स्वर्गं भावयेत्, यागेन भावयेत्, अग्न्याधानादिभिरुपकारं सम्पाद्य भावयेत्' इतिरीत्या भाव्यकरणेतिकर्तव्यतासमन्वय इति भाव्याद्यंशत्रयवतीयम् । शब्दभावना च अविधापदाभिधेया वैदिकशब्दनिष्ठा लिङादिरूपविधिप्रत्ययमात्रगम्या, अस्याश्च अर्थभावना भाव्या, विधिर्लिङादि करणं, आर्थवादिकी स्तुतिरितिकर्तव्यतेत्येषाऽपि भाव्याद्यंशत्रयवतीत्यलमधिकेन ।

† अस्य 'योऽश्वमेधेन यजते' इति शेषः । इत्यादाविति अत्र 'इष्टसाधनताबोधानन्तरमपि' इति पूरणीयम् ।

तेतिविध्यनुमानस्य सर्वतन्त्रसिद्धत्वात्*। 'मध्यमादौ वियोगतः' मध्यमोत्तमपुरुषे लिङ इष्टसाधनतावियोगात्, कुर्याः कुर्यामित्यत्राज्ञादिकं† प्रतीयते, आज्ञा तु अभिप्राय एव इति प्रथमपुरुषेऽपि इच्छा अर्थः। 'अन्यत्र कृप्तसामर्थ्यात्' अध्येषणादिलिङाम् इच्छावाचकत्वकल्पनात्‡। 'निषेधानुपपत्तितः' 'न कलञ्जं भक्षयेत्' इत्यत्रेष्टसाधनत्वनिषेधस्य बाधितत्वात्§। बलवदनिष्टाननुबन्धित्वञ्च न विध्यर्थः, 'श्येनेनाभिचरन् यजेत' इत्यादौ अदर्शनात्||, अप्रवर्तमानपुरुषस्य च बलवद्द्वेषविषयत्वात् बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावस्य बाधितत्वादिति ॥ १३ ॥

स्वमतमाह

---

* सर्वतन्त्रसिद्धत्वात् सर्वतन्त्रसिद्धान्तसिद्धत्वात्, स च 'सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतः सर्वतन्त्रसिद्धान्तः' इति न्यायसूत्रे (१अ०।१आ०।४प्र०) दर्शितः।

† आदिना सङ्कल्पपरिग्रहः, अनुपदमनुष्ठीयमानकर्मणः स्वान्यकर्तृकत्वेनेच्छा आज्ञा, स्वकर्तृकतयाऽभिप्रायस्तु सङ्कल्पः। केचित्तु 'आज्ञा त्वभिप्राय एव' इत्युत्तरग्रन्थदृष्ट्या आदिपदमत्र नास्तीत्यनुमिमते।

‡ सत्कारपुरःसरनियोगेच्छा अध्येषणा, यथा गुरो मामध्यापय इत्यादौ।

§ अयं भावः, एतन्मते नञर्थविशेष्यकान्वयस्यात्रासम्भवेन 'नञ्-राहित्ये यस्य विधेयत्वं, नञा तदभाव एवावगम्यते' इतिनियमानुसारेण प्रकृते कलञ्जभक्षणं नेष्टसाधनं इत्येवार्थो वर्णनीयः, स च न सम्भवति, कलञ्जभक्षणस्य तृप्तिरूपेष्टसाधनतया तत्र तदभावविरहादिति।

|| अयमाशयः, श्येनेन हि शत्रुक्षयार्थतया हिंसारूपेण शत्रुक्षय इव नरकोऽपि भवति, स च बलवान् अनिष्ट इति तदनुबन्धिनि श्येने कुतस्तदभाव इति।

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १४ ॥

प्रवृत्तिनिवृत्तिविषये आप्ताभिप्रायः लिङादिभिः प्रत्ययैरभिधेयः, इष्टसाधनता त्वनुमेया। वस्तुतस्तु ईश्वरेच्छायाः सर्वविषयकत्वात् निषेधे बाधः, बलवदनिष्टाननुबन्धित्वेनेच्छायाः प्रवक्तृत्वे गौरवमिति प्राचीनमतमेव साधीयः* ॥ १४ ॥

* वक्त्रभिप्रायस्य विध्यर्थत्वे वैदिकविधिप्रत्ययस्य वक्तुरीश्वरस्याभिप्राय एवार्थः, अभिप्रायश्चेच्छैव इति 'न कलञ्जं भक्षयेत्' इत्यादौ कलञ्जभक्षणं नेश्वरेच्छाविषय इत्येवार्थो वक्तव्यः, स च बाधितः, कार्यसामान्यं प्रत्येव ईश्वरेच्छाया हेतुतया कलञ्जभक्षणेऽपि तदनपायात् निषेधस्थले बाध इति तात्पर्यम् ।

अत्रेदं बोध्यं, व्युत्पत्तिवैचित्र्येण विधिसमभिव्याहृतनञर्थः विशेष्यतयैवान्वेतीति कलञ्जभक्षणाभाव ईश्वराभिप्रेत इत्येवार्थान्वयः, 'यदीच्छेद्विपुलां वासं पुत्रसम्पदमात्मनः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इत्यादिकाम्यनिषेधविधिस्थले नित्यनिषेधस्य स्थलेऽपि च नञर्थविशेष्यकान्वयस्य सिद्धत्वात् । यद्वा विध्यर्थस्येच्छाया विषयतासम्बन्धेन धात्वर्थे नान्वयः, किन्तु धात्वर्थतावच्छेदकरूपेण धात्वर्थे उद्देश्यतासंसर्गेणैवेति, तथा च कलञ्जभक्षणस्य कार्यत्वेन ईश्वरेच्छाविषयत्वेऽपि विशेषतस्तदिच्छोद्देश्यत्वाभावान्निषेधोपपत्तिः । यदि च, 'इच्छा सामान्यं नाभिप्रायः, किन्तु कृपावत् इच्छाविशेष एवाभिप्रायः, स च अन्येच्छाद्यनधीनः कर्तव्यत्वेनेच्छारूपः, इच्छात्वव्याप्याभिप्रायत्वजातिमान् वा, अतएव 'अगत्या मयेदं कृतं न तु ममाभिप्रेतमिदम्' इत्यादिप्रयोगः' इत्यादिकं विभाव्यते, तदा प्रतिषिद्धक्रियायामीश्वराभिप्रायाभावात् निषेधस्थले बाधाशङ्कैव नोदेति। 'श्येनेनाभिचरन् यजेत' इत्यादावभिचारस्य सामान्यतः कर्तव्यत्वेनेश्वरेच्छाभावेऽपि जिघांसोः कर्तव्यत्वेन तदभिप्रायोऽस्त्येवेति न दोषः, अतएव मीमांसाभाष्ये (१अ०।१पा०।२सू०) 'कथं पुनरनर्थः कर्तव्यतयोपदिश्यते ?' इति पूर्वपक्षयित्वा 'उच्यते, नैव श्येनादयः कर्तव्या विज्ञायन्ते, यो हि

श्रुतेरित्यस्य व्याख्यान्तरमाह

तत्त्व एव च वेदोऽयं परमेश्वरगोचरः ।

स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥ १५ ॥

सर्वंच वेदभागे ईश्वरः प्रतिपादितः, 'यज्ञो वै विष्णुः' (तै॰सं॰) 'पश्यत्यचक्षुः'(श्वे॰उ॰) इत्यादिश्रुतिषु 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' (वृहदा॰) इत्यादिषु च, न तु सिद्धार्थतया अमीषामन्यच तात्पर्यं, यथा स्वर्गनरकादिबोधकानां, तथा 'ईश्वरमुपासीत' इतिविध्येकवाक्यतया तेषां लभ्यते ऽपि प्रामाण्यमेव, अन्यथा स्वर्गादिपदानामपि स्वार्थे प्रामाण्यं न स्यात्, तदेतदुक्तं स्वार्थद्वारैवेति । स्वार्थप्रतिपादनद्वारा एव विधौ सिद्धार्थतात्पर्यात्* । 'वाक्यात्', वैदिकप्रशंसानिन्दा-

---

हिंसितुमिच्छेत्, तस्यायमभ्युपाय इति हि तेषामुपदेशः, "श्येनेनाभि-चरन् यजेत" इति हि समामनन्ति, न त्वभिचरितव्यमिति' इति शबरस्वामिनः समादधिरे । यच्च बलवदनिष्टेत्यादिकं नव्यैरनुक्तमपि उक्तमिति कृत्वा गौरवमभिहितं, तदपि प्राचीनमतापेक्षया लाघवमेव, बलवदनिष्टेत्यादिकमप्यपेक्षमाणस्य नव्यमतस्य गुरुतरत्वादिति प्राचीन-दोषदुष्टमपि प्राचीनमतं प्राचीनानामेव साधीयः, नव्यानां पुनर्नवीन-सरण्यैवानुसरणीयेत्यलम् ।

* अयं निष्कर्षः, क्रियाबोधनायैव प्रवृत्तस्य वेदस्य यदंशे क्रिया नावगम्यते, भूतार्थादिबोधकस्य तस्य न स्वार्थे प्रामाण्यं परन्तु विध्यंश एव तात्पर्यमिति 'यज्ञो वै विष्णुः' इत्यादिविध्यनात्मकश्रुतेर्भूतार्थतया न स्वार्थे प्रामाण्यमिति कथमनया ईश्वरसिद्धिरिति मीमांसकाशङ्का। अत्र च तन्मतमाश्रित्यैवायं सिद्धान्तः, 'यन्न दुःखेन सम्भिन्नम्' इत्या-दीनां भूतार्थानामपि स्वर्गादिबोधकवाक्यानां 'स्वर्गकामो यजेत' इत्यादिविध्येकवाक्यतया यथा स्वार्थे प्रामाण्यं स्वीकृतम्, तथा 'ईश्वर-मुपासीत' इत्यादिविध्येकवाक्यतयैव 'यज्ञो वै विष्णुः' इत्यादीश्वर-प्रतिपादकवाक्यानां प्रामाण्यमकामेनाप्यङ्गीकार्यमिति ।

वाक्यानि प्रशंसानिन्दाज्ञानपूर्वकाणि प्रशंसानिन्दावाद्वाक्यत्वात् परिणतिसुरसमाम्रफलमित्यादिवत् ॥ १५ ॥

संख्याविशेषादित्यस्य व्याख्यान्तरमाह

स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा ।

समाख्याऽपि च शाखानां नाद्यप्रवचनादृते ॥ १६ ॥

वैदिकोत्तमपुरुषेण स्वतन्त्रोच्चारयितुः सङ्ख्या वाच्या, 'तत् ऐचत एकोऽहं बहु स्याम्' (छान्दो०)इत्यादिबहुषु उत्तमपुरुषश्रुतेः। सङ्ख्यापदार्थमन्यमाह* समाख्येत्यादि । सर्वासां शाखानां हि काठककालापकाद्याः समाख्याः संज्ञाविशेषाः श्रूयन्ते, ते च नाध्ययनमात्रनिबन्धनाः, अध्येतॄणामानन्त्यात् †आदावन्यैरपि तदध्ययनात्, तस्मादतीन्द्रियार्थदर्शी भगवानेव कारुणिकः सर्गादावस्मदाद्यदृष्टाकृष्टकाठकादिशरीरविशेषमधिष्ठाय यां शाखामुक्तवान् तस्याः शाखायास्तन्नाम्ना व्यवदेश इति सिद्धमीश्वरमननं मोक्षहेतुः ॥ १६ ॥

यस्येश्वरे न विश्वासस्तं प्रत्याह

इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते

येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।

किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः

काले कारुणिक त्वयैव कृपया ते तारणीया नराः ॥१७॥

इतिशब्दः स्वरूपे, एवंशब्दः प्रकारार्थः, शैलसारः लोहं,

---

* अन्यं 'संख्यायते विशेषेण ज्ञाप्यतेऽनया' इति व्युत्पत्तिसम्बन्धं समाख्यारूपमपरमर्थम्। † अनादाविति पाठे संसार इति शेषः।

ऽतिकठिनशिला वा । प्रस्तुते ईश्वरे विप्रतीपविधयः प्रतिकूलपराः, तादृशा अपि उच्चैरतिशयेन काले भवच्चिन्तकाः, शङ्काकलङ्कशून्याः कार्याः ॥ १७ ॥

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयि
त्वद्वानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१८॥

अद्वा तत्त्वं, सन्तृप्यत इति कर्मकर्त्तरि* ।

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-
र्यद्वासयेदपि च दक्षिणवामकौ† द्वौ ।
नो वा, ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥ १९ ॥

इति पञ्चमः स्तवकः ।

नो वासयेत् ततः किमस्माकम् ।

इति श्रीहरिदासभट्टाचार्यविरचितकुसुमाञ्जलिकारिका-
व्याख्यानं समाप्तम् ॥

---

* कर्मकर्तरीति लट्प्रत्ययनिष्पन्नमिति शेषः । तथा च यत् चेतो संद्वेशोषि तत् स्वयमेव संदृप्यते नेत्यर्थः ।

† अमरेशगुरोर्दक्षिणवामकौ तत्तत्स्वीकारेऽनुकूलप्रतिकूलपक्षौ, अथ च दक्षिणवामकराविति श्लेषः । अमरेशगुरोर्बृहस्पतेरपि गुरुरिति वाऽन्वयः ।

वाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत् । 'सङ्ख्या-विशेषात्', द्व्यणुकपरिमाणं सङ्ख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणककपालद्वयारब्धघट-परिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवत्*, अणु-परिमाणञ्च न परिमाणजनकं, नित्यपरिमाणत्वात् अणुपरि-माणत्वाद्वा, एवञ्च सर्गादौ द्व्यणुकपरिमाणहेतुपरमाणुनिष्ठ-द्वित्वसङ्ख्या च नास्मदाद्यपेक्षाबुद्धिजा, अतस्तदानीन्तनापेक्षा-बुद्धिरीश्वरस्यैवेति । विश्वविदव्यय इति विशिष्टस्याव्ययत्वं, तेन नित्यसर्वविषयकज्ञानसिद्धिः† ॥ १ ॥

'ननु शरीरविशिष्टस्य कर्तृतया विशेषणबाधात्मको विशिष्ट-बाध इति (१), कर्तृजन्यत्वव्यापकशरीरजन्यत्वाभावात् कर्तृज-न्यत्वाभाव इति सत्प्रतिपक्षता च (२), यद्वा 'कर्ता शरीर्येव' इति व्याप्तिविरोधिनी (३), यद्वा व्याप्त्या यथादर्शनप्रवृत्तया शरीरी कर्ता उपनेयः, पक्षधर्मतया च क्षित्यादावशरीरीति विशिष्टसाध्याप्रसिद्धिः विशेषणविशेष्यविरोधश्च (४), यद्वा शरी-

---

* यादृशपरिमाणयुक्तेन कपालद्वयेन एको घटो जन्यते, तादृश-परिमाणयुक्तेनैव कपालत्रयेण द्वितीयोऽपि घटो जातः, परन्तु पूर्वघटपरिमाणापेक्षया द्वितीयस्य उत्कृष्टपरिमाणवत्त्वं प्रत्यक्षसिद्ध-मिति, तत्र कारणचिन्तायां प्रथमस्य कपालद्वयजातत्वात् द्वितीयस्य त्रयजातत्वाच्च परिमाणवैलक्षण्यमित्यङ्गीकार्यं, तथा च द्वितीय-घटपरिमाणं कपालगतत्रित्वसङ्ख्याजन्यमिति प्रकृतदृष्टान्तता ।

† विशिष्टस्य विश्वज्ञानवतः, अव्ययत्वं नित्यत्वं, साध्यते इति शेषः, तेनेति विशिष्टाव्ययत्वे विधेयस्य विशेषणविशेष्योभयान्वितत्वनियमादिति हृदयम् ।

रजन्यत्वाद्युपाधिना व्याप्यत्वासिद्धिः (५), इति कार्यत्वहेतौ पञ्च दोषाः'*, तत्राह

न बाधोऽस्योपजीव्यत्वात्, प्रतिबन्धो न दुर्बलैः ।
सिद्ध्यसिद्ध्योर्विरोधो न, नासिद्धिरनिबन्धना ॥ २ ॥

ईश्वरे धर्मिणि शरीरबाधात् कर्तृत्वबाधो (१) न, अधिकरणज्ञानं विना अभावज्ञानासम्भवात् अस्य कार्यत्वस्य धर्मिसाधकस्य† अधिकरणज्ञानजनकतया अवश्यापेक्षणीयत्वेन बलवत्त्वात्, एवञ्च न विशेषणबाधात्मको विशिष्टबाधः प्रत्यक्षात्मक इति, ईश्वरो न कर्ता अशरीरत्वात् इत्यनुमानबाधोऽपि नेत्यर्थः। क्षित्यादि न सकर्तृकं शरीराजन्यत्वात् इति (२) न प्रतिबन्धकं, सत्प्रतिपक्षहेतोः शरीरांशवैयर्थ्यात् व्याप्यत्वासिद्धा‡ दुर्बलत्वात् । तृतीयेऽपि कार्यत्वव्याप्तेः पक्षधर्मत्वसहकारात् विपक्षबाधकतर्कावताराच्च§ बलवत्त्वम्, उपन्यस्तायाः 'कर्ता शरीर्यैव' इति व्याप्तेर्दुर्बलतया न प्रतिबन्धः । चतुर्थे च यदि पक्षधर्मतया अशरीरी उपस्थितस्तदा न विरोधः, कर्तृत्व-

---

* नैते पञ्चविधहेत्वाभासरूपाः पञ्च दोषा इति तदुपपादनाय यत्नेनालम् ।

† धर्मी ईश्वरः ।

‡ अयमभिसन्धिः, व्याप्तिलक्षणे व्याप्यतावच्छेदकधर्मान्तराघटितत्वरूपविशेषणसत्त्वात् शरीराजन्यत्वहेतोरजन्यतात्वरूपव्याप्यतावच्छेदकधर्मान्तरघटिततया व्याप्यत्वासिद्धिरिति ।

§ पक्षेति क्षित्यादिरूपपक्षेऽशरीरिकर्तृकत्वस्यैव सम्भवादित्यर्थः। विपक्षबाधकतर्कश्च उत्तरकारिकायामुक्तः ।

स्याच्छरीरित्वसमानाधिकरणस्योपलम्भात्, तदनुपस्थापने तु न विरोधः, विरोधाश्रयस्यासिद्धेः । पञ्चमे च विपक्षबाधकतर्कसत्त्वात् तदभावनिबन्धना अज्ञानरूपाऽसिद्धिर्व्याप्यत्वासिद्धिर्वा न, शरीरजन्यत्वोपाधेरपि विपक्षबाधकाभावेनापास्तत्वात्* ॥ ॥ २ ॥

'ननु यदीश्वरः कर्ता स्यात्, शरीरी स्यादिति प्रतिकूलतर्कावतारोऽनुकूलतर्काभावश्च', तत्राह

तर्काभासतयाऽन्येषां, तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥

प्रतिकूलतर्कास्तावदीश्वरासिद्धा आश्रयासिद्धा इत्याभासाः । कर्तारं विना कार्यं न स्यादिति तर्कस्तु 'विभूषणं' उपकारकः । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' (गीता०) इत्यागमस्य† । 'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' (मनु० अ०१२) इति तर्कानुगृहीतस्यागमस्य बलवत्त्वम् ॥ ३ ॥

'ननु कार्यत्वं प्रयत्नजन्यत्वेऽप्रयोजकम्', अत्राह

स्वातन्त्र्ये जडताहानिः, नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावः, विशेषस्तु विशेषवान्‡ ॥ ४ ॥

---

* विपक्षबाधकावतारेणापास्तत्वादिति पाठान्तरम् ।

† आगमस्येत्यस्य उपकारक इत्यग्रिमेणान्वयः ।

‡ विशेषः क्रियाविशेषश्चेष्टारूपः, विशेषवान् प्रयत्नविशेषरूपहेतुमान्, तथा च 'यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि' इति न्यायात् क्रियासामान्ये प्रयत्नसामान्यस्य हेतुत्वं सिध्यति ।

न हि कर्तारं हेतुं विना कार्यं*। परमाणोरेव यत्नवत्वेऽचैतन्यानुपपत्तिः, अचेतनस्य चेतनप्रेरितस्यैव जनकत्वात्। अदृष्टमपि दृष्टकारणसहकारेणैव फलजनकम्। न च 'चेष्टायामेव भोक्तृप्रयत्नो हेतुः, न तु क्रियासामान्ये' इति, चेष्टायां विशेषप्रयत्नस्य हेतुत्वेऽपि क्रियासामान्ये प्रयत्नसामान्यस्य कारणत्वानपायात्, अन्यथा वीजविशेषस्याङ्कुरविशेषे जनकत्वेनाङ्कुरसामान्यं प्रति वीजत्वेन हेतुताया अपि विलोपापत्तेः॥ ४॥

'ननु धृत्यादीनां प्रयत्नजन्यत्वे किं मानम्' इति, अत्राह

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः।

विच्छेदेन पदस्यापि†, प्रत्ययादेश्च पूर्ववत्॥ ५॥

धृतिविनाशयोः प्रयत्नजन्यत्वान्निरुपाधित्वं। विच्छेदेनान्तराप्रलयेन आदर्शाद्यभावात् अर्वागदर्शी नाद्यव्यवहारमूलं, व्यवहारानभिज्ञत्वादिति सर्गाद्यकालीनघटादिव्यवहारप्रवर्तकः पुरुषः सिध्यति। एवं प्रत्ययादेर्वेदजन्यधीप्रामाण्यादेरपि निरुपाधित्वम्‡।

अथ वा कार्येत्यादिकं (१का०) अन्यथा व्याख्यायते, कार्यं तात्पर्यं, तात्पर्यविषय एव शब्दप्रामाण्यमिति तात्पर्यं हि यस्य

---

* इदन्तु हेत्वभाव इत्यंशस्य विवरणम्।

† ननु घटादिव्यवहारः पूर्वपूर्वकुलालपरम्पराप्रयोज्य एवास्तु, तदर्थमीश्वरेणालमित्यत आह विच्छेदेनेति पदस्य व्यवहारस्य, अस्यापि निरुपाधित्वमित्यनेनान्वयः।

‡ अन्तराप्रलयेन तत्प्रामाण्यस्य अर्वाग्दर्शिप्रयोज्यत्वासम्भवादिति भावः।

वेदे स एवेश्वरः। आयोजनं व्याख्यानं, वेदास्तदर्थविद्व्याख्याताः महाजनपरिगृहीतवाक्यत्वात्, अव्याख्यातत्वे पदार्थानवगमेऽननुष्ठानापत्तेः, एकदेशदर्शिनश्च व्याख्यायां नाश्वासः। एवं धृतिर्धारणं, धृत्यादेरित्यादिग्रहणात् अनुष्ठानसङ्ग्रहः*। एवमीश्वरादिपदार्थतया ईश्वरसिद्धिः, तदुक्तम् 'उद्देश एव तात्पर्यं, व्याख्या विश्वदृशः सती। ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः', उद्देश इच्छाविशेषः, एवं 'अहं सर्वस्य प्रभवः' इत्याद्यावहंपदं स्वतन्त्रोच्चारयितृपरं, लोकस्वस्वे सतात्पर्यकशब्दस्यैव प्रमाणत्वात् 'य एव लौकिकास्त एव वैदिकाः' इति लौकिकाहमादिपदवदलौकिकेऽप्येयमेव व्यवस्था। प्रत्ययतः विधिप्रत्ययात्, आप्ताभिप्रायो विध्यर्थः, यस्याभिप्रायः†, स एवेश्वरः॥ ५॥

प्रवृत्तिः कृतिरेवाच, सा चेच्छातः, यतश्च सा।
तत् ज्ञानं, विषयस्तस्य विधिः, तज्ज्ञापकोऽथवा॥ ६॥

विधिजन्यज्ञानात् प्रवृत्तिर्दृश्यते, सा च इच्छातश्चिकीर्षातः, चिकीर्षा च कृतिसाध्यत्वेष्टसाधनताज्ञानात्, तज्ज्ञानस्य विषयः कार्यत्वं इष्टसाधनत्वञ्च विधिरिति प्राचां मतं, स्वमतमाह तज्ज्ञापकोऽथवेति इष्टसाधनत्वानुमापक आप्ताभिप्रायो विधिप्रत्ययार्थः॥ ६॥

---

* धारणं धारणाख्यसंस्कारः, वेदास्तदर्थविद्भूता अनुष्ठिता वेत्यादिरीत्या प्रयोगः।

† अभिप्राय इति वेदे इति शेषः।

प्रवृत्तिप्रयोजकेच्छाहेतुज्ञानविषयं परिशेषयति*

इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।

असत्त्वात् प्रत्ययत्यागात् कर्त्तृधर्मो† न सङ्करात् ॥ ७ ॥

स्पन्दस्य‡ कर्त्तृधर्मस्य प्रवृत्तिप्रयोजकत्वे 'आत्मानं विजानीयात्' इत्यत्राप्रवृत्तिप्रसङ्गात्, ग्रामं गच्छतीत्यतः प्रवृत्त्यापत्तेश्च। यत्नस्य विधित्वे दोषमाह अप्रवृत्तेः, आख्यातान्तरेण यत्ने बोधितेऽपीष्टसाधनत्वाप्रतिसन्धाने अनिष्टसाधनत्वज्ञाने वाऽप्रवृत्तेः। इच्छाया विधित्वे दोषमाह विरोधत इति। इच्छाया विधित्वे इच्छयैव तज्ज्ञानं जननीयं, इच्छाया ज्ञानेन चेच्छा जननीया इत्यन्योन्याश्रयः§, तदिदमुक्तं विरोधत इति। ननु 'इच्छाज्ञानं लिङा जननीयं‖' इति, अत्राह असत्त्वादिति। इच्छाज्ञाने जाते प्रवृत्तिहेतुस्वरूपसदिच्छाभावात् प्रवृत्तिर्न स्यात्, इच्छायाः स्वरूपसत्या एव प्रवृत्तिहेतुत्वात्, न च लिङ्श्रवणकाले इच्छा

---

* परिशेषयति इतरस्मिन् बाधप्रदर्शनेन परिशेषात् 'आप्ताभिप्राय एव विध्यर्थः' इति व्यवस्थापयति ।

† विध्यर्थ इति शेषः ।

‡ स्पन्दस्य चेष्टादिरूपक्रियायाः । अयं भावः, स्वज्ञानद्वारा प्रवृत्तौ प्रयोजको यः, स एव विध्यर्थ इत्यविवादं, तत्र क्रियाया तथात्वे ज्ञानस्य क्रियात्वाभावेन विजानीयादित्यादौ प्रवृत्त्यनुपपत्तिः, गच्छतीत्यादौ तु गमनक्रियाया अवगमात् प्रवृत्त्यापत्तिश्चेति ।

§ अयं भावः, विध्यर्थज्ञानेनैव जायमाना इच्छा प्रवर्त्तयतीति नियमात् प्रवृत्त्यनुकूला इच्छा विध्यर्थज्ञानमपेक्षते, इच्छारूपविध्यर्थज्ञानञ्च मानसप्रत्यक्षरूपं स्वविषयमिच्छामपेक्षते इत्यन्योन्याश्रयः ।

‖ तथा च इच्छाया शाब्दबोधः, स च न स्वविषयमिच्छामपेक्षते इति न दोषः ।

स्वरूपसतीत्यर्थः। 'ननु लिङेव इच्छाजनिका' इति, अत्राह प्रत्ययत्यागादिति। इच्छाकारणत्वेन गृहीतस्य प्रत्ययस्य ज्ञानस्य कारणस्य त्यागापत्तेः व्यभिचारादित्यर्थः*। 'लिङ्श्रुतिकाले सुखत्वादिप्रकारकधीजन्येच्छा लिङर्थः†' इति, अत्राह सङ्करादिति। इष्टसाधनताज्ञानस्य उपायेच्छाहेतोरवश्यंस्वीकारात्, तत्र‡ च कारणान्तराभावात् लिङ्पदमेव कारणम्, अतः फलेच्छाज्ञानं न प्रवृत्तिहेतुः, तद्विनापि प्रवृत्तिसम्भवात्, तथाच सङ्करात् इष्टसाधनत्वज्ञानरूपसाधनसहचारत्वात्, इच्छाज्ञानस्येच्छाजनकत्वे मानाभावेन तस्य लिङ्पदजन्यत्वे मानाभावाच्चेति ॥ ७ ॥

'ननु यत्नज्ञानमेव प्रवर्तकमस्तु, आख्यातान्तरञ्च न यत्नवाचकम्, अनुकूलव्यापारमात्र एव आख्यातशक्तिः, रथो गच्छतीत्यादौ तथाकल्पनात्', तत्राह

कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः, पूर्वा परस्मिन् सैव भावना ॥ ८ ॥

---

* अत्रायमाशयः, नियतपूर्ववर्तिन एव कारणत्वात् इष्टसाधनताज्ञानरूपप्रसिद्धकारणाभावेऽपि केवलं लिङा इच्छोत्पत्तौ तस्य नियतपूर्ववर्तित्वाभावप्रसङ्गेन कारणतैव न स्यादिति।

† 'फलेच्छाज्ञानं उपायेच्छां प्रति कारणं' इति मतमाश्रित्येदं, तथा च सुखरूपमुख्यफलेच्छा विध्यर्थस्तज्ज्ञानञ्च उपायेच्छायां हेतुः, सा च प्रवृत्ताविति नोक्तदोषावसर इति पूर्वपक्षः। सिद्धान्तस्तु, फलेच्छाज्ञानस्य उपायेच्छां प्रति कारणतायां प्रमाणाभावेन नोक्तप्रक्रियासम्भव इति।

‡ तत्र इष्टसाधनताज्ञाने।

घटः कृतोऽङ्कुरो न कृत इति व्यवहारात्* कुलालादिः कर्त्ता न कारकान्तरमिति कृञ्धात्वर्थः कृतिः†। 'ननु यत्न-पर्यायता‡ स्यात्', अत आह पूर्व्वेति। परस्मिन्नुत्तरकालव-र्त्तिनि फले विद्यमाने, सैव कृतिरेव, पूर्वा साधनीभूता, भा-वना, फलानुकूलतापन्नयत्न एवाख्यातार्थः। यद्वा फलानु-कूलव्यापारधात्वर्थप्रचयजनिका पूर्वापरस्मिन् पूर्वापरीभूतत्वे सति, कृतिराख्यातार्थः, तथा च प्रयत्नवत्त्वमनुकूलत्वं पूर्वा-परीभूतत्वमिति त्रयमर्थः§ ॥ ८ ॥

'ननु धातुना यत्नः प्रतीयते, आख्यातस्य च अनुकूलव्या-पारमात्रार्थकत्वम्, आक्षेपादेव च यत्नलाभः‖' इति, अत आह

---

* अयं भावः, करोतेरनुकूलव्यापारार्थकत्वेऽङ्कुरादावपि अस्मदा-दीनां साक्षात् परम्परया वाऽनुकूलव्यापारसत्त्वादयं व्यवहारो नोप-पद्यते, प्रयत्नार्थकत्वे च घटाङ्कुरयोर्यथाक्रमं अस्मदादीनां कर्तृताप्रयो-जकप्रयत्नसत्त्वासत्त्वाभ्यामुपपन्नोऽयं व्यवहारः, अत एव च घटानु-कूलव्यापारवतामपि दण्डादीनां प्रयत्नाभावात् न कर्तृत्वं किन्तु कुला-लस्यैवेति।

† तथा च य एव करोतेरर्थः स एवाख्यातस्यापीति कृतिरेवाख्या-तार्थ इति शेषः।

‡ आख्यातस्येति शेषः।

§ एतादृशविशिष्टार्थकल्पनायां शक्यतावच्छेदकगौरवादिदोषप्रस-ङ्गादिति शेषः। विशिष्टार्थलाभस्तु परस्परमन्वयबलादिति भावः।

‖ कृञ्धातोर्यत्नार्थत्वेऽपि नाख्यातार्थो यत्नः, आख्यातस्थले यत्न-बोधस्तु 'तस्य तदनुकूलव्यापारस्तस्य तस्मिन् यत्नं विनाऽनुपपन्नः' इत्या-क्षेपादेवेति पूर्वपक्षः।

भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः ।
तथा विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ ८ ॥

तथा कृत्या तद्वाचकपदेन, पचति पाकं करोतीति विवरणात् तत्र शक्तिः, अनुकूलव्यापारस्य यत्नानाक्षेपकत्वात्, वर्तमानपाकानुकूलव्यापारस्याचेतनेऽपि भावात् । ओदनमिति-कर्मपदोत्तरं पचति भुङ्क्ते वेति जिज्ञासा च कर्मणः कृतिव्याप्यत्वप्रतिसन्धानेन* यथा पचतीत्यनन्तरं कर्मादौ जिज्ञासा ॥ ८ ॥

'ननु कर्तुरपि विवरणात् तत्रापि शक्तिराख्यातस्य स्यात्', तत्राह

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभे तु साकाङ्क्षेण व्यवस्थितिः ॥ १० ॥

आख्यातवाच्यया संख्यया आश्रयस्य आक्षेपादेव लाभाच्च कर्तरि शक्तिकल्पना†, प्रथमान्तपदोपस्थाप्यत्वे सति आख्यातार्थविशेष्यत्वमाक्षेपलभ्यत्वं, भुक्त्वा इत्यादौ क्त्वान्तार्थानन्तर्यवारणाय विशेष्यदलम्, सुप्यते इत्यादौ वर्तमानत्वविशेष्यत्वं स्वापस्यापीति सत्यन्तदलम् । चैत्रस्तण्डुलं पचतीत्यत्र द्वितीयार्थकर्मतावरुद्धत्वात् तण्डुलस्य, न तत्र भावनाऽऽकाङ्क्षेति भावना

---

* न त्वनुकूलव्यापारस्य यत्नाक्षेपकतया, कर्मादाविति कृतेः कर्मादिव्यापकत्वप्रतिसन्धानेनेति शेषः । अयं भावः, कर्मणः कृतिव्याप्यतया कर्मण्येव सामान्यतः कृत्युपस्थितौ सत्यां 'पचति भुङ्क्ते वा' इति भवति कृतिविशेषजिज्ञासा, सामान्यप्रकारकज्ञानस्य विशेषजिज्ञासाहेतुत्वादिति ।

† 'अनन्यलभ्यः शब्दार्थः' इति नियमात् ।

शुद्धप्रातिपदिकार्थान्वयिनी, अतएव 'यं यं भावनाऽन्वेति, तं तं सङ्ख्याऽपि' इति, एकपदोपात्तभावनान्वयसत्त्वात्, कर्त्रादि-सङ्ख्याभिधान एव च प्रथमेति। एवं कर्माऽपि नाख्यातपदवा-च्यम्* ॥ १० ॥

'नन्वस्तु कर्मधर्मो विधिः', तत्राह

अतिप्रसङ्गान्न फलं, नापूर्वं तत्त्वहानितः।

तदलाभाच्च कार्यस्य, न क्रियाऽप्यप्रवृत्तितः ॥ ११ ॥

कर्म स्वर्गादि, तद्धर्मः कार्यत्वं यदि विध्यर्थः, तत्राह अति-प्रसङ्गान्न फलं। स्वर्गे कार्यत्वज्ञाने सति स्वर्गासाधनेऽपि प्रवृत्त्या-पत्तेः। यदि कर्म अपूर्वं, तद्धर्मः कार्यत्वं विध्यर्थः, तत्राह नापूर्वं तत्त्वहानितः। शाब्दबोधात् पूर्वं नोपस्थितमित्यत एवापूर्वं, पूर्व-मुपस्थितौ च न तत्त्वम्, अनुपस्थितौ च कथं तत्र शक्तिधीः। 'ननु कार्यत्वरूपेण शक्तिधीः, शाब्दबोधे तु योग्यतया अपूर्वस्य कार्यविशेषस्य भानं', तत्राह तदलाभाच्च कार्यस्येति। विधिवि-शेषापूर्वयोरलाभप्रसङ्गात्, तत्र फलकामस्य नियोज्यत्वस्यासम्भ-वात्†। यद्वा 'ननु कार्यत्वेनोपलक्षितायामपूर्वव्यक्तौ शक्तिग्रहः, गन्धवत्त्वेनोपलक्षितायां पृथिवीत्वविशिष्टायां व्यक्तौ पृथिवी-

* अस्य 'ग्रामो गम्यते इत्यादिकर्माख्यातस्थले' इति पाठः।

† अयं भावः, काम्यस्थले काम्यरूपभविष्यत्स्वर्गादिफलकामनायां [illegible] उपस्थितानां यागादीनामाशुविनाशिनां तत्साधनत्वासम्भवेन तदन्यथा-नुपपत्त्याऽपूर्वं कल्प्यतां, नित्यस्य निषेधस्य च फलाभावेन [illegible] कल्पनायां प्रमाणाभावात् 'सन्ध्यामुपासीत' 'अष्टम्यां मांसं नाश्नीयात्' इति नित्यनिषेधस्थलीयविधिप्रत्ययस्य निरर्थकत्वापत्तिरिति।

परस्येव*', इत्यत्राह तदसाभात्। अपूर्वत्वविशिष्टापूर्वव्यक्त्यनुप-स्थितेः, गन्धवत्त्वेनापि हि पृथिवीत्वविशिष्टस्य स्मरणमनुमानं वा सम्भवति, प्रागनुभवात्, प्रकृते तथात्वेऽपूर्वत्वव्याघातादित्यर्थः। 'ननु कर्म यागादि, तद्धर्मः कार्यत्वं विधिः', तत्राह न क्रियापीति। अनिष्टसाधनताधीकाले प्रवृत्त्यदर्शनात्। अत्र अपिना नापूर्वमपि, उक्तदोषादित्यर्थः ॥ ११ ॥

'ननु करणं शब्दः, तद्धर्मोऽभिधा, तज्ज्ञानं प्रवर्तकम्', अत एवाहुः "अभिधां भावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः", अभिधा यागप्रवर्तिका इतिधीः शब्दात्, आख्यातार्थस्य उत्पादना उत्पत्त्यनुकूलक्रियारूपा' इति, अत्राह

अप्रवृत्तेश्च नाभिधाऽपि गरीयसी।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १२ ॥

अभिधायां मानाभावात्, अभिधाशब्दतोऽभिधाज्ञानेऽपि अप्रवृत्तेः, गरीयसी उचिता, लिङर्थतयेति शेषः। 'ननु अन्यस्य

* यथा हि 'गन्धवती पृथिवीपदशक्या' इत्युपलक्षणविधया शक्तिग्रहः, न तु 'गन्धवत्त्वेन गन्धवती पृथिवीपदशक्या' इति गन्धवत्त्वं शक्यतावच्छेदकीकृत्य शक्तिग्रहः, तथा कार्यत्वेन कार्यं विधिशक्यमिति न शक्तिधीः, किन्तु कार्यं विधिशक्यमिति उपलक्षणविधयेति भावः। सिद्धान्तस्तु पृथिवीत्वजातेः प्रागुपस्थितिसत्त्वेन तस्य शक्यतावच्छेदकत्वे लाघवप्रतिसन्धानात् गन्धवत्त्वस्य उपलक्षणविधयैव भानं, प्रकृतेऽपूर्वत्वस्य प्रागनुपस्थित्या नैवं सम्भवतीति।

लिङर्थत्वे बाधात् परिशेषेणाभिधा लिङर्थः' इति, अत्राह बाधकस्येति । प्रकृतेऽपि बाधकसम्भवात्* ॥ १२ ॥

'ननु करणस्य यागादेर्धर्मं इष्टसाधनत्वं विध्यर्थोऽस्तु' तत्राह

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र कृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥ १३ ॥

विध्यर्थस्य इष्टसाधनताया 'हेतुत्वात्' लिङ्गतयोपन्यासात्, न च स्वस्य स्वलिङ्गत्वमिति, अग्निकामो दारुणी मथ्नीयादित्युक्ते कुत इत्याकाङ्क्षायां वक्तारो वदन्ति यतो दारुद्वयमथनमग्निसाधनमिति। 'अनुमानात्' अर्थवादादिष्टसाधनताबोधानन्तरमपि विधेरनुमानात्, यदि चानुमितेनापि विधिना इष्टसाधनत्वमेव बोध्यम्, तदा तदनुमानवैयर्थ्यम्, 'तरति मृत्युं, तरति ब्रह्महत्याम्†' इत्यादौ मृत्युब्रह्महत्यासन्तरणकामोऽश्वमेधेन यजे-

---

* मीमांसकमतेनेदम्, तन्मतं यथा, धात्वर्थोत्पादानुकूलो व्यापारो भावना, सा च अर्थभावना शब्दभावना चेति द्विधा, तत्राद्या यत्न-भावनापदाभिधेया कर्तृनिष्ठा प्रयत्नादिरूपा आख्यातप्रत्ययसामान्यस्यार्थः, अस्यास्त्र्यंशत्रयमस्ति, तथा हि 'स्वर्गकामो यजेत' इत्यादावाख्यातेन भावनायामुपस्थितायां किं भावयेत्, केन भावयेत्, कथं भावयेदित्याकाङ्क्षायां स्वर्गकामपदादिभिः, 'स्वर्गं भावयेत्, यागेन भावयेत्, अग्न्याधानादिभिरुपकारं सम्पाद्य भावयेत्' इतिरीत्या भाव्यकरणेतिकर्तव्यतासमन्वय इति भाव्याद्यंशत्रयवतीयम् । शब्दभावना च अविधापदाभिधेया वैदिकशब्दनिष्ठा लिङादिरूपविधिप्रत्ययमात्रगम्या, अस्याश्च अर्थभावना भाव्या, विधिलिङादि करणं, अर्थवादिकी स्तुतिरितिकर्तव्यतेत्येषाऽपि भाव्याद्यंशत्रयवतीत्यलमधिकेन ।

† अस्य 'योऽश्वमेधेन यजते' इति शेषः । इत्यादाविति अत्र 'इष्टसाधनताबोधान्तरमपि' इति पूरणीयम् ।

तेतिविध्यनुमानस्य सर्वतन्त्रसिद्धत्वात्* । 'मध्यमादौ वियोगतः' मध्यमोत्तमपुरुषे लिङ इष्टसाधनतावियोगात्, कुर्याः कुर्यामित्यत्राज्ञादिकं† प्रतीयते, आज्ञा तु अभिप्राय एव इति प्रथमपुरुषेऽपि इच्छा अर्थः । 'अन्यत्र क्लृप्तसामर्थ्यात्' अध्येषणादिलिङाम् इच्छावाचकत्वकल्पनात्‡ । 'निषेधानुपपत्तितः' 'न कलञ्जं भक्षयेत्' इत्यत्रेष्टसाधनत्वनिषेधस्य बाधितत्वात्§ । बलवदनिष्टाननुबन्धित्वस्य न विध्यर्थः, 'श्येनेनाभिचरन् यजेत' इत्यादौ असम्भवात्||, अप्रवर्तमानपुरुषस्य च बलवद्द्वेषविषयत्वात् बलवद्द्वेषविषयदुःखजनकत्वसामान्याभावस्य बाधितत्वादिति ॥ १३ ॥

स्वमतमाह

---

* सर्वतन्त्रसिद्धत्वात् सर्वतन्त्रसिद्धान्तसिद्धत्वात्, स च 'सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतः सर्वतन्त्रसिद्धान्तः' इति न्यायसूत्रे (१अ०।१आ०। ४प्र०) दर्शितः ।

† आदिना सङ्कल्पपरिग्रहः, अनुपदमनुष्ठीयमानकर्मणः स्वान्यकर्तृकत्वेनेच्छा आज्ञा, स्वकर्तव्यतयाऽभिप्रायस्तु सङ्कल्पः । केचित्तु 'आज्ञा त्वभिप्राय एव' इत्युत्तरग्रन्थदृष्ट्या आदिपदमत्र नास्तीत्यनुमिमते ।

‡ सत्कारपुरःसरनियोगेच्छा अध्येषणा, यथा गुरो मामध्यापय इत्यादौ ।

§ अयं भावः, एतन्मते नञर्थविशेष्यकान्वयस्यात्रासम्भवेन 'नञ्-राहित्ये यस्य विधेयत्वं, नञा तदभाव एवावगम्यते' इतिनियमानुसारेण प्रकृते कलञ्जभक्षणं नेष्टसाधनं इत्येवार्थो वर्णनीयः, स च न सम्भवति, कलञ्जभक्षणस्य तृप्तिरूपेष्टसाधनतया तत्र तदभावविरहादिति ।

|| अयमाशयः, श्येनेन हि शत्रुवधार्थतया हिंसारूपेण शत्रुवध इव नरकोऽपि भवति, स च बलवान् अनिष्ट इति तदनुबन्धिनि श्येने कुतस्तदभाव इति ।

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ १४ ॥

प्रवृत्तिनिवृत्तिविषये आप्ताभिप्रायः लिङादिभिः प्रत्ययैरभिधेयः, इष्टसाधनता त्वनुमेया। वस्तुतस्तु ईश्वरेच्छायाः सर्वविषयकत्वात् निषेधे बाधः, बलवदनिष्टाननुबन्धित्वेनेच्छायाः शक्यत्वे गौरवमिति प्राचीनमतमेव साधीयः* ॥ १४ ॥

---

* वक्त्रभिप्रायस्य विध्यर्थत्वे वैदिकविधिप्रत्ययस्य वक्तुरीश्वरस्याभिप्राय एवार्थः, अभिप्रायश्चेच्छैव इति 'न कलञ्जं भक्षयेत्' इत्यादौ कलञ्जभक्षणं नेश्वरेच्छाविषय इत्येवार्थो वक्तव्यः, स च बाधितः, कार्यसामान्यं प्रत्येव ईश्वरेच्छाया हेतुतया कलञ्जभक्षणेऽपि तदनपायात् निषेधस्थले बाध इति तात्पर्यम् ।

अत्रेदं बोध्यं, व्युत्पत्तिवैचित्र्येण विधिसमभिव्याहृतनञर्थः विशेष्यतयैवान्वेतीति कलञ्जभक्षणाभाव ईश्वराभिप्रेत इत्येवात्रान्वयः, 'यदीच्छेद्विष्णुना वासं पुत्रसम्पदमात्मनः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इत्यादिकाम्यनिषेधविधिस्थले नित्यनिषेधस्य सत्त्वाच्च नञर्थविशेष्यकान्वयस्य सिद्धत्वात्। यद्वा विध्यर्थस्येच्छाया विषयतासम्बन्धेन धात्वर्थे नान्वयः, किन्तु धात्वर्थतावच्छेदकरूपेण धात्वर्थे उद्देश्यतासंसर्गेणैवेति, तथा च कलञ्जभक्षणस्य कार्यत्वेन ईश्वरेच्छाविषयत्वेऽपि विशेषतस्तदिच्छोद्देश्यत्वाभावान्निषेधोपपत्तिः। यदि च, 'इच्छा सामान्यं नाभिप्रायः, किन्तु कृपावत् इच्छाविशेष एवाभिप्रायः, स च अन्येच्छाद्यनधीनः कर्तव्यत्वेनेच्छारूपः, इच्छात्वव्याप्याभिप्रायत्वजातिमान् वा, अतएव 'अगत्या मयेदं कृतं न तु ममाभिप्रेतमिदम्' इत्यादिप्रयोगः' इत्यादिकं विभाव्यते, तदा प्रतिषिद्धक्रियायामीश्वराभिप्रायाभावात् निषेधस्थले बाधाशङ्कैव नोदेति। 'श्येनेनाभिचरन् यजेत' इत्यादावभिचारस्य सामान्यतः कर्तव्यत्वेनेश्वरेच्छाभावेऽपि जिघांसोः कर्तव्यत्वेन तदभिप्रायोऽस्त्येवेति न दोषः, अतएव मीमांसाभाष्ये (१अ०।१पा०।२सू०) 'कथं पुनरनर्थः कर्तव्यतयोपदिश्यते ?' इति पूर्वपक्षयित्वा 'उच्यते, नैव श्येनादयः कर्तव्या विज्ञायन्ते, यो हि

श्रुतेरित्यस्य व्याख्यान्तरमाह

स्तुत्य एव च वेदोऽयं परमेश्वरगोचरः ।

स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥ १५ ॥

सर्वत्र वेदभागे ईश्वरः प्रतिपादितः, 'यज्ञो वै विष्णुः' (तै॰सं॰) 'पश्यत्यचक्षुः'(श्वे॰उ॰) इत्यादिश्रुतिषु 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' (बृहदा॰) इत्यादिषु च, न तु सिद्धार्थतया अमीषामन्यत्र तात्पर्यं, यथा स्वर्गनरकादिबोधकानां, तथा 'ईश्वरमुपासीत' इतिविध्येकवाक्यतया तेषां लभ्यते ऽपि प्रामाण्यमेव, अन्यथा स्वर्गादिपदानामपि स्वार्थे प्रामाण्यं न स्यात्, तदेतदुक्तं स्वार्थद्वारैवेति । स्वार्थप्रतिपादनद्वारा एव विधौ सिद्धार्थतात्पर्यात्* । 'वाक्यात्', वैदिकप्रशंसानिन्दा-

---

हिंसितुमिच्छेत्, तस्यायमभ्युपाय इति हि तेषामुपदेशः, "श्येनेनाभिचरन् यजेत" इति हि समामनन्ति, न त्वभिचरितव्यमिति' इति शवरस्वामिनः समादधिरे । यच्च बलवदनिष्टेत्यादिकं नव्यैरनुक्तमपि उक्तमिति कृत्वा गौरवमभिहितं, तदपि प्राचीनमतापेक्षया लाघवमेव, बलवदनिष्टेत्यादिकमप्यपेक्षमाणस्य नव्यमतस्य गुरुतरत्वादिति प्राचीनदोषदुष्टमपि प्राचीनमतं प्राचीनानामेव साधीयः, नव्यानां पुनर्नवीनसरणिरेवानुसरणीयेत्यलम् ।

* अयं निष्कर्षः, क्रियाबोधनायैव प्रवृत्तस्य वेदस्य यदंशे क्रिया नावगम्यते, भूतार्थादिबोधकस्य तस्य न स्वार्थे प्रामाण्यं परन्तु विध्यंश एव तात्पर्यमिति 'यज्ञो वै विष्णुः' इत्यादिविध्यनात्मकश्रुतेर्भूतार्थतया न स्वार्थे प्रामाण्यमिति कथमनया ईश्वरसिद्धिरिति मीमांसकाशङ्का । अत्र च तन्मतमाश्रित्यैवायं सिद्धान्तः, 'यन्न दुःखेन सम्भिन्नम्' इत्यादीनां भूतार्थानामपि स्वर्गादिबोधकवाक्यानां 'स्वर्गकामो यजेत' इत्यादिविध्येकवाक्यतया यथा स्वार्थे प्रामाण्यं स्वीकृतम्, तथा 'ईश्वरमुपासीत' इत्यादिविध्येकवाक्यतयैव 'यज्ञो वै विष्णुः' इत्यादीश्वरप्रतिपादकवाक्यानां प्रामाण्यमकामेनाप्यङ्गीकार्यमिति ।

वाक्यानि प्रशंसानिन्दाज्ञानपूर्वकाणि प्रशंसानिन्दावाक्यवाक्यत्वात् परिणतिसुरसमाम्रफलमित्यादिवत्॥ १५ ॥

संख्याविशेषादित्यस्य व्याख्यान्तरमाह

स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा।

समाख्याऽपि च शाखानां नाद्यप्रवचनादृते॥ १६ ॥

वैदिकोत्तमपुरुषेण स्वतन्त्रोच्चारयितुः संख्या वाच्या, 'तत ऐक्षत एकोऽहं बहु स्याम्' (छान्दो॰) इत्यादिबहुषु उत्तमपुरुषश्रुतेः। संख्यापदार्थमन्यमाह* समाख्येत्यादि। सर्वासां शाखानां हि काठककाण्वापकाद्याः समाख्याः संज्ञाविशेषाः श्रूयन्ते, ते च नाध्ययनमात्रनिबन्धनाः, अध्येतॄणामानन्त्यात् †आद्यावन्यैरपि तदध्ययनात्, तस्मादतीन्द्रियार्थदर्शी भगवानेव कारुणिकः सर्गादावस्मदाद्यदृष्टाकृष्टकाठकादिशरीरविशेषमधिष्ठाय यां शाखामुक्तवान् तस्याः शाखायास्तन्नाम्ना व्यवदेश इति सिद्धमीश्वरमननं मोक्षहेतुः॥ १६ ॥

यस्येश्वरे न विश्वासस्तं प्रत्याह

इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते तारणीया नराः॥१७॥

इतिशब्दः स्वरूपे, एवंशब्दः प्रकारार्थः, शैलसारः लोहं,

---

* अन्यं 'संख्यायते विशेषेण ख्याप्यतेऽनया' इति व्युत्पत्तिवचनं समाख्याशब्दमपरमर्थम्। † अनादाविति पाठे संसार इति शेषः।

अतिकठिनशिला वा । प्रस्तुते ईश्वरे विप्रतीपविधयः प्रतिकूलपराः, तादृशा अपि उच्चैरतिशयेन काले भवच्चिन्तकाः, शङ्काकलङ्कशून्याः कार्याः ॥ १७ ॥

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नं त्वयि
त्वद्धानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ॥१८॥

अद्धा तत्त्वं, सन्तृप्यत इति कर्मकर्त्तरि* ।

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-
र्यद्वासयेदपि च दक्षिणवामकौ† द्वौ ।
नो वा, ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥ १९ ॥

इति पञ्चमः स्तवकः ।

नो वासयेत् ततः किमस्माकम् ।

इति श्रीहरिदासभट्टाचार्यविरचितकुसुमाञ्जलिकारिका-
व्याख्यानं समाप्तम् ॥

---

* कर्मकर्तरीति लट्प्रत्ययनिष्पन्नमिति शेषः । तथा च यत् चेतो संदृप्तोषि तत् स्वयमेव संदृप्यते नेत्यर्थः ।

† अमरेशगुरोर्दक्षिणवामकौ तत्स्वस्वीकारेऽनुकूलप्रतिकूलपक्षौ, अथ च दक्षिणवामकराविति श्लेषः । अमरेशगुरोर्बृहस्पतेरपि गुरुरिति वाऽन्वयः ।

# शुद्धिपत्रम ।



| पृ॰ | प॰ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ७ | १० | अन्यय॰ | अन्वय॰ |
| १३ | १२ | धर्माधर्मिणोः | धर्मधर्मिणोः |
| ३६ | २२ | भावप्रत्यक्षे | ऽभावप्रत्यक्षे |
| ५९ | ११ | क्रिया॰ | कृति॰ |

* i. e. the arguments [illegible] the validity of the premisses which becomes necessary if these are not accepted. The words may also mean 'laid at the feet of God.'

† The latter half of this s'loka (the former in the original) has a double meaning, as nearly every word has a technical or logical sense,—"this handful of flowers, which reveals the knowledge of true minor terms and affords a banquet to the intelligent by the perception of an undoubted universal connection [between the middle and major terms] &c."—I may add that the proverb alluded to in the commentary छिद्रच्छिन्नो भावो द्रव्यवत् प्रकाशते is quoted to shew that though *rasa* properly denotes an attribute, it here means the subject which possesses it.

‡ Alluding to such passages as that in the Bṛihadárany. Upanishad (ii. 4, 5,) 'behold the soul *(átmá)* is verily to be seen, heard, contemplated and profoundly meditated upon.'

the illusory knowledge that is the cause of the sensible world; and therefore the contemplating of *this* is the true means of liberation?"* To meet this doubt he replies,

> II.—That Being, whose worship the wise consider as the means of the two heaven-like liberations,—He, the Supreme Soul, is here ascertained (as the object of our contemplation).

The 'two heaven-like liberations' [as intensely desirable from the absence of all pain,] are the liberation while still remaining in this life, and the absolute emancipation. The contemplation of God is a means of liberation through the merit produced thereby or through the knowledge of one's own soul. This S'ruti† is the proof that it is such a cause, 'having known him only one goes beyond death; there is no other path to obtain it.' And that the knowledge of one's own soul is the cause of liberation is proved by the s'ruti,‡ 'When a man truly discriminates the soul and says "I am he," what can he wish for? or in desire of what object can he follow the continuous onflow of mundane events?'

> III.—Now although with regard to that Being whom all men alike worship, whichever of the [four wellknown] ends of man they may desire,—(thus the followers of the Upanishads as the very Knower,—the disciples of Kapila as the perfect first Wise,—those of Patanjali as Him who, untouched by pain, action, fruit or desert, having assumed a body in order to create, revealed the tradition of the Veda and is gracious to all living beings,—the Mahápás'upatas as the Independent one, undefiled by vaidic or secular violations,—the S'aivas as S'iva,—the Vaishṇavas as Purushottoma,—the followers of the Puráṇas as the great Father (Brahmá),—the Ceremonialists as the Soul of the sacrifice,—the Saugatas as the Omniscient,—the Jainas as the Unobstructed,—the Mímánsakas as Him who is pointed out as

---

* This being the seat of the great error, it is to this that our contemplations should be directed.

† S'wetás'watara Upanishad, iii. 8.

‡ Bṛihadár. Up. iv. 4, 12.—S'ankara read सञ्ज्वरेत् for संचरेत्.

to be worshipped,—the Chárvákas as Him who is established by the convention of the world,—the followers of the Nyáya as Him who is all that is said worthy of Him,—why farther detail? whom even the artizans themselves worship as the great artizan, Vis'wakarman,)—although, I say, with regard to that Being, the adorable S'iva, whom all recognise throughout the world as universally acknowledged like castes, families, family invocations of Agni, schools, social customs, &c. how can there arise any doubt? and what then is there to be ascertained?—Still this logical investigation may be well called the contemplation of God, and this is really worship when it follows the hearing the S'ruti. Therefore that adorable one who hath been often heard mentioned in the S'ruti, Smṛiti, narrative poems, Puráṇas, &c., must now be contemplated, according to such a S'ruti as 'He is to be heard and to be contemplated,' and such a Smṛiti as 'by the Veda, inference and the delight of continued meditation,—in this threefold manner producing knowledge, a man obtains the highest concentration.' Now there is, in short, a fivefold opposition to our theory,—as based, first, on the non-existence of any supernatural cause of another world (as *adṛishṭa*, the merit and demerit of our actions);—or secondly, on the possibility of our putting in action certain causes of another world (as sacrifices,) even if God be allowed to be non-existent;—or thirdly, on the existence of proofs which show the non-existence of God;—or fourthly, on the opinion that, even if God does exist, he cannot be a cause of true knowledge to us;—or fifthly, on the absence of any argument to prove his existence.

"Very"—without any second; "knower"—existing in the form of pure knowledge; "first wise"—existing in the form of intelligence at the first beginning of creation; "perfect"—as possessed of the eight divine faculties; ignorance, egoism, desire, aversion, and tenacity of mundane existence, are the five "pains;" sacrifice, injuring others, &c.

as causing merit and demerit, are the "actions;" rank, length of life and enjoyment are the "fruits;" merit and demerit the "deserts" left as a residue in the mind. "Revealed"—*i. e.* manifested [as a previously existing object], since the Veda is eternal. He is "gracious" as being the original instructor in arts, as of making jars, &c. "S'iva," void of the three qualities; the "great Father" as the father even of the father; "omniscient" with a momentary omniscience.* The "obstructions" are ignorance, desire, aversion, delusion, and tenacity of mundane existence,—"pointed out as to be worshipped" as the Vaidic mantras, &c.—possessed of "all that is said worthy of him" in the various descriptions of God. "School" *(charaṇa)* means here recension *(s'ákhá)*.† Although the existence of God is indeed established by the S'ruti's evidence, yet, if we wish to employ inference, the absence of doubt need not be a fault in our argument.‡ He therefore proceeds towards the close of the passage to propose a doubt, according to the principle of satisfying an opponent.

IV.—We have to meet the opponent's first objection by establishing the existence of a supernatural cause of another world in the form of merit and demerit, and, if this be established, then it follows that a God is established as the superintendent thereof, since a non-intelligent cause can only produce its effect by the superintendence of something intelligent. He therefore proceeds to establish this.

> IV.—From dependence,—from eternity,—from diversity,—from universal practice,—and from the apportionment to each individual soul,—mundane enjoyment implies a supernatural cause [*i. e.* 'desert.']

Our proposition is that there exists a supernatural cause of another world, *i. e.* a cause beyond the reach of the senses. *a.* First of all, then, to establish the class of causes in general, he says "from dependence." Dependence means here that the effect is occasional. All effects must have a cause since they are occasional, like the gratification produc-

---

* The Mádhyamika Bauddhas hold that everything is momentary, πάντα ῥεῖ.

† For the original difference between charaṇa and s'ákhá cf. Müller's Ancient Sanskrit literature, p. 125. On *pravara*, see ibid., p. 386.

‡ In ordinary cases people do not take the trouble of arguing if there is no doubt to be solved.

ed by food; [otherwise, if they did not depend on a cause, they could be found everywhere and always]. *b.* " But if the cause of a jar, &c. were eternal, would it not follow that the jar, &c. would also be eternal, and therefore we must assume the jar's cause to be itself only occasional, and therefore the perpetual series of causes must be all occasional, each dependent on its previous cause?" To meet this objection of a regressus in infinitum he says "from the eternity [of the succession of cause and effect]," like the continued series of seed and shoot,*—the meaning being that a regressus in infinitum ceases to be a fault, if, like this one alleged in our illustration, it can be proved by the evidence of our senses. *c.* " But [if you require a cause,] why not say [with the Vedántin] that Brahma alone is the cause, or [with the Sánkhya] Nature in the form of various individual intellects?" To meet this, he says "from the diversity [of effects, as heaven, hell, &c.]"—as the effects imply a diversity of causes, from their being diverse as effects. *d.* " But why not accept a visible cause as sacrifices, &c.—why have recourse to an invisible desert *(adṛishṭa)?*" To meet this, he adds "from the universal practice," *i. e.* from the fact that all men, desiring fruit in another world, do engage in sacrifices, &c. It is only the conviction that they do produce heaven, &c. as their fruit, which makes men engage in sacrifices, &c.; and these [passing away when the action is over] cannot produce this fruit unless by means of some influence which continues to act after the rite is over,—and hence is this invisible influence, called merit or demerit, established. *e.* " But why not say that this desert does not reside in the same subject as the enjoyment [*i. e.* the individual soul,] but produces the enjoyment by abiding in the thing enjoyed?" He replies " from the apportionment to each soul." Since the enjoyment resides in each soul severally, we should be unwarranted to attribute its production to a desert residing elsewhere.

V.—" But why may we not suppose that the effect arises without a cause, according to the adversary's opinion given in the Nyáya Sútras (iv. 22), ' there is an origination of entities from no cause, for we see the sharpness of a thorn, &c.?' " He replies,

---

* Cf. Cowper's remarks on his cucumber, " I raised the seed that produced the plant, that produced the fruit, that produced the seed, that produced the fruit I sent you."

V.—"Without a cause" cannot mean the denial of a cause or of production, nor can it imply that the effect itself or an unreal thing is the cause; and if you suggest "spontaneously," it cannot mean *that,* from effects being definitely limited.

Does your "without a cause" mean that *a.* there is no cause at all? or *b.* does it deny all production? or *c.* does it imply the rejection of all foreign causes? or *d.* of all *real* causes?* Under either pair of alternatives the ultimate result is that you have no cause at all, and, under the latter pair, the additional absurdity of a false cause.†—Or *e.* does it mean "spontaneously?" But effects are definitely limited, since, if they were not, occasionalness would be at an end, [as they might then arise always and everywhere.]

VI.—"But if we are to assume an eternal succession of causes and effects (as otherwise we cannot account for the occasionalness of effects,)—still even then, as that which is distinguished by the nature of fire (*scil.* fire) will not always be found only where straw, &c., are, these latter will have to be excluded from being causes, and therefore we shall again have our old difficulty of occasionalness being precluded, as no other cause can be mentioned." Here the Mímánsakas come in and maintain that we must assume as a cause the fact of there being present a capacity favourable to fire, and thus "capacity" must be allowed to be a separate category‡ varying according to each individual, non-eternal in the non-eternal thing, *described as it is in the line*

> 'Eternal in the eternal, and in the non-eternal produced by the cause of that thing in which it resides.'

Or as another opinion holds [that of S'ríkaráchárya] "there is an eternal capacity favourable to fire, abiding in straw, the *araṇi* wood, and the burning gem."—The Naiyáyikas however maintain that there is an actual difference of class which accompanies the being produced from straw, araṇi or the burning gem,—since, if we assumed a capacity favourable to one and the same thing (*i. e.* to fire,) and yet itself existing in things of different classes (as straw, &c.,) then on seeing

---

* That is, there can be imagined false causes.

† Under any one of the four cases you have really no proper '*cause*' at all (thus in the third, the thing must precede itself to fulfil the definition of a cause;) and hence any supposed cause (as in *c.*, and *d.*,) can only be a false one.

‡ Cf. Siddhánta Muktávali, pp. 3, 4.

smoke, &c., you could not draw the inference of fire, &c.* And again, [if this assumption were correct], we should not have such respective colligations of concurrent causes of fire, as straw and blowing, *araṇi* wood and rubbing, or the burning gem and the reflected rays of the sun, since we see in other cases that that which possesses the property that determines causation (*i. e.* according to the present theory, capacity) will produce its effect in conjunction with anything which similarly possesses some other property that determines causation; and therefore, in the present case, we should be led to expect fire to result from such a conjunction as the gem and blowing. If you would meet this by assuming that there is one capacity favourable to fire, which resides not in any one thing alone (as straw,) but in the several combinations, as straw and blowing, and the rest,— this is not the true solution, but you must rather accept (from its greater simplicity) my theory that a difference of class resides in the various fires produced by straw, &c., as is seen by the evidence of the senses, like the fire of a lamp, &c.† Hence Capacity is not to be assumed as a separate category. These discussions are condensed in the following couplet.

> VI.—This succession of causes and effects has no beginning, nor has it one capacity abiding in things of different classes [as straw, &c.]; we must diligently strive for ourselves to fix the several limitations, by determining the constant accompaniments and separations.‡

The meaning of this is that we must assume a difference of class (i. e. species,) in effects produced by different causes. [If you ask "Then, in reference to *what* cause, is the class of fire (as the genus,) the determining notion of all the various special fires as effects, I reply,] heat as possessing a peculiar hot quality to the touch§ is the cause in the case of all the various fires. [In the case of the different species of fire

* Fire would not be the cause of smoke, in its nature as fire, but simply as having a capacity for producing smoke; and therefore on seeing smoke, our true inference would be that the mountain has not "fire" but "a capacity for producing smoke."

† The fire in a lamp lights the house, while fire from wood or cow-dung produces little or no light.

‡ *E. g.* Fire may be found, and yet no straw, but a gem; and vice versâ.

§ This epithet is added to exclude 'gold.'

we have different causes, straw, &c., but in all alike we have the general cause 'heat,' *i. e.* heat is the necessary and universal antecedent].

VII.—"But may we not say that as one and the same lamp gives light, destroys the wick and illumines different objects as jars, &c., so we may have one common cause, either as the one Brahma (with the Vedántin,) or as Nature (with the Sánkhya) which is not to be distinguished from the various intellects apportioned to the different souls, as the cause and effect are identical;—and hence the existence of God will not be established as the superintendent of merit and demerit, [since our supposed causes will evolve their own effects, and we therefore need not assume *adṛishṭa* as the special cause of the world]?"

To meet this he says,

> VII.—Of *one* there can be no succession, of the *same* there can be no variety; it is not a special capacity since this cannot be severed,—nature is hard to be violated.

From one cause alone there can be no determinate ***succession*** of effects [as they would be all produced simultaneously;] and from the same cause, *i. e.* one general cause (as the Sánkhya's prakṛiti) there cannot be a variety of effects, *i. e.* effects of different kinds; and therefore since we find successive effects produced, we must conclude that there are successive causes, and, since we find effects of various kinds, we must conclude the causes to be likewise various in kind.

He now refutes the doubt that perhaps various effects might be produced from one general cause by special capacities, by the words "it is not a special capacity, since this cannot be severed" from the subject in which it resides, as the power and that which possesses the power are really identical; and if you sever them, then we shall have to accept the power as the true cause, and in this way your unity of cause is destroyed, and duality follows.—"May we not hold that one cause can produce various effects simply by its own nature?" He replies "nature is hard to be violated." If that same nature which existed when one effect had to be produced, continued to exist at the time of the production of another, then the nature of water, &c., might exist in fire,—that is, a thing's real nature cannot remain concealed. The instance of the lamp is not in point, as it can be explained by a difference in the concurrent causes neces-

